द्यौः समवर्त्तत । पद्भ्याम्भूमिर्दिशुः श्रोत्रात्तथा लोका २ऽँ ॥ ऽअँकल्प्पयन् ३१ । १३ ॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तोस्यासीदाज्ज्यङ्ग्रीष्मऽइध्मः शरद्धविः ३१। १४ ॥ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः । देवा यद्यज्ञन्तन्वानाऽ अबध्नन्पुरुषम्पशुम् ।३१।१५ ॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् । ते ह नाकम्महिमानः सचन्त यत्र पूर्वे साद्ध्याः सन्ति देवाः ३१ । १६ ॥ अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्म्मणः समवर्त्तताग्ग्रे । तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्त्यस्य देवत्वमाजानमग्ग्रे ३१ । १७ ॥ वेदाहमेतम्पुरुषम्महान्तमादित्यवर्णन्तमसः परस्तात् । तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ३१ । १८ ॥ प्रजापतिश्चरति गर्ब्भेऽअन्तरजायमानो बहुधा विजायते । तस्य योनिम्परि पश्यन्ति धीरास्तस्मिन्ह तस्थुर्ब्भुवनानि विश्वा ।३१।१९॥ यो देवेब्भ्यऽआतपति यो देवानाम्पुरोहितः । पूर्वो यो देवेब्भ्यो जातो नमो रुचाय ब्राह्मये ३१ । २० ॥ रुचम्ब्राह्मञ्जनयन्तो देवाऽ अग्ग्रे तदब्रुवन् । यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवाऽअसन्वशे ३१ । २१ ॥ श्रीश्चते लक्ष्मीश्चपत्न्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मऽइषाण सर्वल्लोकम्मऽइषाण ३१ । २२ ॥ इति रुद्राभिषेककर्म्मणि द्वितीयोऽध्यायः ॥

हरिः-ॐ-आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् । सङ्क्रन्दनो निमिषऽएकवीरः शतꣳ सेनाऽअजयत्साकमिन्द्रः ३१।१३॥ सङ्क्रन्दनेनाऽनिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण जयत तत्सहद्ध्वं युधो नरऽइषुहस्तेन वृष्णा ११।३४ ॥ सऽइषुहस्तैः स निषङ्गिभिर्व्वशी सꣳस्रष्टा स युधऽइन्द्रो गणेन । सꣳसृष्टजि-

रसोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता १७। ३५॥ बृहस्पते परि दीया रथेन रक्षोहा मित्राँ२ ॥ अपबाधमानः । प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेद्ध्यविता रथानाम्।१७।३६॥बलविज्ञायस्स्थविरः प्रवीरः सहस्वान्वाजी सहमानऽउग्रः।अभिवीरोऽअभिसत्त्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् १७। ३७॥ गोत्रभिदङ्गोविदं वज्रबाहुञ्जयन्तमज्ज्म प्रमृणन्तमोजसा। इमꣳ सजाताऽअनुवीरयध्वमिन्द्रꣳ सखायोऽअनुसꣳरभध्वम् १७। ३८॥ अभिगोत्राणि सहसा गाहमानो दयो वीरः शतमन्युरिन्द्रः। दुश्च्यवनः पृतनाषाडयुद्ध्योस्माकꣳ सेनाऽअवतु प्रयुत्सु १७। ३९॥ इन्द्रऽआसान्नेता बृहस्पतिर्दक्षिणा यज्ञः पुरऽएतु सोमः। देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्रम् १७। ४०॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञऽआदित्यानाम्मरुताꣳ शर्धऽउग्रम्। महामनसाम्भुवनच्यवानां घोषो देवानाञ्जयतामुदस्थात्। १७। ४१॥ उद्धर्षय मघवन्नायुधान्युत्सत्वनाम्मामकानाम्मनाꣳसि। उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानाञ्जयतां यन्तु घोषाः १७। ४२॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं याऽइषवस्ता जयन्तु। अस्माकं वीराऽउत्तरे भवन्त्वस्माँ२ ॥ ऽउदेवाऽअवताहवेषु॥ १७। ४३॥ अमीषाञ्चित्तम्प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि। अभिप्रेहि निर्दह हृत्सुशोकैरन्धेनामित्रास्तमसा सचन्ताम्। १७। ४४॥ अवसृष्टा परापत शरव्ये ब्रह्मसꣳशिते। गच्छामित्रान्प्रपद्यस्व मामीषाङ्कञ्चनोच्छिषः। १७। ४५॥ प्रेता जयता नरऽइन्द्रो वः शर्म यच्छतु। उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ। १७। ४६॥ असौ या सेना मरुतः परेषामभ्यैति न

ओजंस्रा स्प्पर्द्धमाना। ताङ्गूहतु तमसापव्रतेन यथाऽमीऽ-
अन्योऽअन्यन्न जानन्। १७। ४७॥ यत्र बाणाऽसम्पतं-
न्ति कुमारा विशिखाऽइव। तन्नुऽइन्द्रो बृहस्पतिरदितिः
शर्म्मं यच्छतु विश्वाहा शर्म्मं यच्छतु। १७। ४८॥ मर्म्मा-
णि ते वर्म्मणा छादयामि सोमस्त्वा राजामृतेनानुवस्ताम्।
उरोर्वरीयो वरुणस्ते कृणोतु जयन्तन्त्वानु देवामदन्तु।
१७। ४९॥ इति रुद्राभिषेककर्म्मणि–तृतीयोऽध्यायः॥

हरिः—ॐ विभ्राड्बृहत्पिबतु सोम्म्यम्मध्वायुर्दधद्यज्ञपता-
वविंहुतम्। वातजूतो योऽअभिरक्षतित्त्मना प्प्रजाऽपुपो-
ष पुरुधा विराजति ३३। ३०॥ उदुत्त्यञ्जातवेदसन्देवं वह-
न्ति केतवः। दृशे विश्वाय सूर्य्यम् ३३। ३१॥
येनापावकचक्षसाभुरण्यन्तञ्जना २ँ॥ ऽअनु। त्त्वं वरुण
पश्यसि। ३३। ३२॥ दैव्यावद्ध्वर्य्यूऽआगतछंरथेन सूर्य-
त्वचा। मध्वा यज्ञछंसमञ्जाथे। तम्प्रत्नथायं वेनश्चित्रन्दे-
वानाम् ३३। ३३॥ तम्प्रत्नथा। पूर्वथा विश्वथे मथा
ज्ज्येष्ठतातिम्बर्हिषदंछं स्वर्विदम्। प्रतीचीनं वृजनन्दोहसे
धुनिमाशुञ्जयन्तमनुया सुवर्द्धसे। ३३। १२॥ अयं
वेनश्चोदयत्पृश्निगर्ब्भा ज्ज्योतिर्जरायू रजसो
विमाने। इममपाछं सङ्गमे सूर्य्यस्य शिशुन्न
विप्रा मतिभीरिहन्ति। ७। १६॥ चित्रन्देवाना-
मुदगादनीकञ्चक्षुर्म्मित्रस्य वरुणस्याग्नेः। आप्प्रा द्यावा
पृथिवीऽअन्तरिक्षछंसूर्य्य आत्मा जगतस्तस्थु-
षश्च। १३। ४६॥ आनऽइडाभिर्विदथे सुशस्ति विश्वानरः
सविता देवऽएतु। अपि यथा युवानो मत्सथानो विश्वं-
जगदभिपित्त्वे मनीषा। ३३। ३४॥ यदद्य कच्च वृत्रहन्नु-
गाऽअभिसूर्य्य। सर्वन्तादिन्द्रते वशे। ३३। ३५॥ तरणिर्वि-
श्वदर्शतो ज्योतिष्कृदसि सूर्य। विश्वमाभासि रोच-

नम् । ३७ । ३६ ॥ तत्सूर्य्यस्य देवत्वन्तन्महित्वम्मद्ध्या कर्त्तोर्व्विततꣳ सञ्जभार । यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै । ३३ । ३७ ॥ तन्मित्रस्य वरुणस्याभिचक्षे सूर्य्यो रूपङ्कृणुते द्योरुपस्थे । अनन्तमन्न्यद्रुशदस्य पाजः कृष्ण मन्न्यद्धरितꣳ सम्भरन्ति । ३३ । ३८॥ बण्महा २ꣳ ॥ ऽअसि सूर्य्य बडादित्य महा२ꣳ॥ ऽअसि । महस्ते सतो महिमा पनस्यतेद्धादेव महा २ꣳ ॥ ऽअसि । ३३ । ३९ ॥ बट्सूर्य्यश्श्रवसा महा २ꣳ ॥ ऽअसि सत्रा देव महा २ꣳ ॥ ऽअसि । मन्हादेवानामसुर्य्यः पुरोहितो विभुज्ज्योतिरदाब्भ्यम् । ३३ । ४० । श्रायन्तऽइव सूर्य्यं विश्वेदिन्द्रस्य भक्षत । वसूनि जाते जनमानऽओजसा प्प्रतिभगन्नदीधिम । ३३ । ४१ ॥ अद्द्यादेवाऽउदिता सूर्य्यस्य निरꣳहसः पिपृता निरवद्द्यात् । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवीऽउत द्यौः । ३३ । ४२ ॥ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यञ्च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् । ३३ । ४३ ॥ इति रुद्राभिषेककर्मणि चतुर्थोऽध्यायः ॥

हरिः- ॐ—नमस्ते रुद्रमन्न्यवऽउतो तऽ इषवे नमः । बाहुब्भ्यामुत ते नमः । १६ । १ ॥ यातें । रुद्र शिवा तनूरघोरा पापकाशिनी । तया नस्तन्न्वा शन्तमया गिरिशन्ताभिचाकशीहि । १६ । २ ॥ यामिषुङ्गिरिशन्त हस्ते बिभर्ष्यस्तवे । शिवाङ्गिरित्रताङ्कुरु मा हिꣳसीः पुरुषञ्जगत् १६ । ३ ॥ शिवेन वचसा । त्वा गिरिशाच्छा वदामसि । यथा नः सर्व्वमिज्जगदयक्ष्मꣳ सुमना ऽअसत १६ । ४ ॥ अद्ध्यवोचदधिवक्ता प्प्रथमो दैव्व्यो भिषक् । अहींश्च सर्व्वाञ्जम्भयन्त्सर्व्वाश्च यातु-

धान्न्योऽर्धराचीः परासुव १६ । ५ ॥ असौ यस्ताम्म्रोऽअ-
रुणऽउत बब्भ्रुः सुमङ्गलं ÷ । ये चैनᳬ रुद्रा ऽअभितो
दिक्षुश्रिताः सहस्रशो वैषाᳬ हेडऽईमहे १६ । ६ ॥ असौ यो
वसर्प्पति नीलग्ग्रीवो विलोहितः । उतैनङ्गोपाऽअदृ-
श्श्रन्नदृश्श्रन्नुद हार्य्यः स दृष्टो मृडयाति नः १६ । ७ ॥ न-
मोस्तु नीलग्ग्रीवाय सहस्राक्षाय मीढुषे । अथो येऽ-
अस्य सत्त्वानोऽहन्तेब्भ्योऽकरन्नमं ÷ १६ । ८ ॥ प्प्रमुञ्च ध-
न्न्वनस्त्वमुभयो रार्त्न्योर्ज्ज्याम् । याश्च ते हस्तऽ इषं-
वः पराता भगवो वप १६ । ९ ॥ विज्ज्यन्धनुः ÷ । कपर्द्दिनो
विशल्ल्यो बाणवा उँ ॥ ऽउत । अनेशन्नस्य या इषव
आभुरस्य निषङ्गधिः १६ । १० ॥ याते । हेतिर्म्मीढुष्टम
हस्ते बभूव ते धनुः ÷ । तयास्मान्विश्श्वतस्त्वमयक्ष्म्मया
परिब्भुज १६ । ११ ॥ परिते धन्न्वनो हेतिरस्म्मान्वृणक्तु
विश्श्वतः । अथो यऽइषुधिस्तवारेऽअस्म्मन्निधेहि तम्
१६ । १२ ॥ अवतत्त्य धनुष्ट्वᳬ सहस्राक्ष शतेषुधे । निशीर्य्य
शल्ल्यानाम्मुखा शिवो नं ÷ सुमना भव १६ । १३ ॥ नम-
स्तऽआयुधायानातताय धृष्णवे । उभाब्भ्यामुत तेनमो
बाहुब्भ्यान्तव धन्न्वने ॥ १६ । १४ ॥ मा नो महान्तमुत
मा नोऽ अर्ब्भकम्मानऽउक्षन्तमुत मा नऽ उक्षितम् । मा नो
वधीःपितरम्मोत मातरम्मा नं ÷ प्प्रियास्तन्न्वो रुद्र-
रीरिषः ।१६।१५॥ मा नस्तोके । तनये मानऽआयुषि मा नो
गोषु मा नोऽअश्श्वेषुरीरिषः । मानो व्वीरान्रुद्र भामिनो
वधीर्हविष्म्मन्तः सदमित्त्वा हवामहे । १६ । १६ ॥ नमो
हिरण्यबाहवे । सेनान्न्ये, दिशाञ्च पतये नमो नमो वृक्षेब्भ्यो
हरिकेशेब्भ्यःपशूनाम्पतये नमो नमं ÷ शुष्प्पञ्जराय त्त्विषी
मते पथीनाम्पतये नमो नमो हरिकेशायोपवीतिने पुष्टाना-
म्पतये नमो नमो बब्भ्लुशाय । १६ । १७ ॥ नमो

बभ्लुशार्य । इष्याधिनेऽन्नानाम्पतये नमो नमो भवस्यं हेत्यै जगताम्पतये नमो नमो रुद्रायांततायिने क्षेत्राणाम्पतये नमो नमः सूतायाहन्त्यै वनानाम्पतये नमो नमो रोहिताय । १६ । १८ ॥ नमो रोहिताय । स्थपतये वृक्षाणाम्पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनाम्पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणाम्पतये नमो नमऽउच्चैर्घोषायाक्रन्दयते पत्तीनाम्पतये नमो नमः कृत्स्नायतया । १६ । १९ ॥ नमः कृत्स्नायतया धावते सत्वनाम्पतये नमो नमः सहमानाय निव्याधिनऽआव्याधिनीनाम्पतये नमो नमो निषङ्गिणे ककुभाय स्तेनानाम्पतये नमो नमो निचेरवे परिचरायारण्यानाम्पतये नमो नमो वञ्चते १६ । २० ॥ नमो वञ्चते । परिवञ्चते स्तायूनाम्पतये नमो नमो निषङ्गिणऽइषुधिमते तस्कराणाम्पतये नमो नमः सृकायिभ्यो जिघांसद्भ्यो मुष्णताम्पतये नमो नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यो विकृन्तानाम्पतये नमः । १६ । २१ ॥ नमऽउष्णीषिणे । गिरिचराय कुलुञ्चानाम्पतये नमो नमऽइषुमद्भ्यो धन्वायिभ्यश्च वो नमो नमऽआतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नमऽआयच्छद्भ्योऽस्यद्भ्यश्च वो नमो नमो विसृजद्भ्यः ।१६।२२॥ नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमः शयानेभ्यऽआसीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नमः सभाभ्यः । १६।२३॥ नमः सभाभ्यः । सभापतिभ्यश्च वो नमो नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमो नमऽआव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नमऽउगणाभ्यस्तृंहतीभ्यश्च वो नमो नमो गणेभ्यः । १६ । २४ ॥ नमो गणेभ्यो गणपतिभ्यश्च वो नमो

नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमः सेनाभ्यः । १६।२५ ॥ नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमो रथिभ्योऽअरथेभ्यश्च वो नमो नमः क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्च वो नमो नमो महद्भ्योऽ अर्भकेभ्यश्च वो नमः १६।२६॥ नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्म्मारेभ्यश्च वो नमोनमो निषादेभ्यः पुञ्जिष्टेभ्यश्च वो नमोनमः श्वनिभ्यो मृगयुभ्यश्च वो नमो नमः श्वभ्यः १६।२७॥ नमः श्वभ्यः श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च नमः कपर्दिने १६।२८ ॥ नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय ।१६।२९ ॥ नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सवृधे च नमोऽग्र्याय च प्रथमाय च नमऽआशवे १६।३० ॥ नमऽआशवे चाजिराय च नमः शीघ्र्याय च शीभ्याय च नमऽऊर्म्याय चावस्वन्याय च नमो नादेयाय च द्वीप्याय च१६।३१॥ नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्न्याय च नमः सोभ्याय १६। ३२ ॥ नमः सोभ्याय च प्रतिसर्य्याय च नमो याम्याय च क्षेम्याय च नमः श्लोक्याय चावसान्याय च नमऽउर्वर्य्याय च खल्याय च नमो वन्याय १६।३३॥ नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नमऽआशुषेणाय चाशुरथाय च नमः शूराय चावभेदिने च नमो बिल्मिने १६ । ३४ ॥

नमो॑ बि॒ल्मिने॑ च कव॒चिने॑ च॒ नमो॑ व॒र्म्मिणे॑ च वरू॒थिने॑ च॒ नम॑÷ श्श्रु॒ताय॑ च श्श्रुतसे॒नाय॑ च॒ नमो॑ दुन्दु॒भ्याय चाहन॒न्याय च॒ नमो॑ धृ॒ष्णवे॑ १६। ३५॥ नमो॑ धृ॒ष्णवे॑ च प्रमृ॒शाय॑ च॒ नमो॑ निष॒ङ्गिणे॑ चेषुधि॒मते॑ च॒ नम॑स्तीक्ष्णेष॑वे चायु॒धिने॑ च॒ नम॑÷ स्वायु॒धाय॑ च सु॒धन्व॑ने च १६। ३६॥ नम॒ᳬ स्रुत्या॑य च॒ पथ्या॑य च॒ नम॒ᳬ काट्या॑य च॒ नीप्या॑य च॒ नम॒ᳬ कुल्या॑य च सर॒स्याय च॒ नमो॑ नादे॒याय॑ च वैश॒न्ताय॑ च॒ नम॒ᳬ कूप्या॑य १६। ३७॥ नम॒ᳬ कूप्या॑य चाव॒ट्याय च॒ नमो॒ वीध्र्या॑य चात॒प्याय च॒ नमो॑ मे॒घ्या॑य च विद्यु॒त्याय च॒ नमो॒ वर्ष्या॑य चाव॒र्ष्याय॑ च॒ नमो॒ वात्या॑य १६। ३८॥ नमो॒ वात्या॑य च॒ रेष्म्या॑य च॒ नमो॑ वास्त॒व्याय च वास्तु॒पाय च॒ नम॒ᳬ सोमा॑य च रु॒द्राय च॒ नम॑स्ता॒म्राय॑ चारु॒णाय॑ च॒ नम॑÷ श॒ङ्गवे॑ १६। ३९॥ नम॑÷ श॒ङ्गवे॑ च पशु॒पत॑ये च॒ नम॑ऽ उ॒ग्राय॑ च भी॒माय॑ च॒ नमो॑ऽग्रेव॒धाय॑ च दूरेव॒धाय॑ च॒ नमो॑ ह॒न्त्रे च॒ हनी॑यसे च॒ नमो॑ वृ॒क्षेभ्यो॒ हरि॑केशेभ्यो॒ नम॑स्ता॒राय॑। १६। ४०॥ नम॑÷ शम्भ॒वाय॑ च मयो॒भ॒वाय॑ च॒ नम॑ᳬ शङ्क॒राय॑ च मयस्क॒राय॑ च॒ नम॑÷ शि॒वाय॑ च शि॒वत॑राय च १६। ४१॥ नम॒ᳬ पार्या॑य चावा॒र्या॑य च॒ नम॑÷ प्र॒तर॑णाय चो॒त्तर॑णाय च॒ नम॑स्ती॒र्थ्या॑य च॒ कूल्या॑य च॒ नम॒ᳬ शष्प्या॑य च॒ फेन्या॑य च॒ नम॑÷ सिक॒त्याय १६। ४२॥ नम॑÷ सिक॒त्याय च प्रवा॒ह्याय च॒ नम॑÷ किᳬशि॒लाय॑ च क्षय॒णाय॑ च॒ नम॑÷ कप॒र्दिने॑ च पुल॒स्तये॑ च॒ नम॑ऽ इरि॒ण्याय च प्रप॒थ्याय च॒ नमो॒ व्रज्या॑य। १६। ४३॥ नमो॒ व्रज्या॑य च॒ गोष्ठ्या॑य च॒ नम॒स्तल्प्या॑य च॒ गेह्या॑य च॒ नमो॑ हृद॒य्याय च निवे॒ष्याय च॒ नम॒ᳬ काट्या॑य च गह्वरे॒ष्ठाय च॒ नम॒ᳬ शुष्क्या॑य १६। ४४॥ नम॒ᳬ शुष्क्या॑य च हरि॒त्याय च॒ नम॑÷ पाᳬस॒व्याय च रज॒स्याय च॒ नमो॒ लोप्या॑य चोल॒प्याय च॒ नम॒ऽ ऊर्व्या॑य च॒ सू

ड्यीय च नम÷ पूर्णाय १६ । ४५ ॥ नम÷ पूर्णाय च पर्णशु
दाय च नमऽउद्गुरमाणाय चाभिघ्नते च नमऽआखिदते
च प्रखिदते च नमऽइषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो
नमो वः किरिकेभ्यो देवाना˜ हृदयेभ्यो नमो विचिन्व-
त्केभ्यो नमो विक्षिणत्केभ्यो नमऽआनिहतेभ्य ÷ १६ ।
४६ ॥ द्रापेऽअन्धसस्पते दरिद्रन्नीललोहित ॥ आसाम्प्र-
जानामेषाम्पशूनाम्माभेर्म्मारोङ्मो च नः किञ्चनाममत्
१६ । ४७ ॥ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय
प्रभरामहे मतीः। यथा शमसद्द्विपदे चतुष्पदे विश्वम्पुष्टं
ग्रामेऽअस्मिन्ननातुरम् १६ । ४८ ॥ याते रुद्र शिवा
तनूः शिवा विश्वाहा भेषजी । शिवारुतस्य भेषजी तया
नो मृड जीवसे १६ । ४९ ॥ परिणो रुद्रस्य हेतिर्वृणक्तु प-
रित्वेषस्य दुर्म्मतिरघायोः । अवस्थिरा मघवद्भ्यस्तनुष्व
मीढ्वस्तोकाय तनयाय मृड १६ । ५० ॥ मीढुष्टमशिवतम
शिवो न ÷ सुमना भव । परमे वृक्षऽआयुधन्निधाय कृत्तिं
वसानऽआचर पिनाकम्बिभ्रदागहि १६ । ५१ ॥ विकिरिद्र
विलोहित नमस्तेऽअस्तु भगवः । यास्ते सहस्रं हेतयो
न्यमस्मन्निवपन्तु ताः १६ । ५२ ॥ सहस्राणि सहस्रशो
बाह्वोस्तव हेतय ÷ । तासामीशानो भगवः पराचीना मु-
खाकृधि । १६ । ५३ ॥ असंख्याता सहस्राणि ये रुद्राः
अधिभूम्याम् । तेषाᳬं सहस्रयोजनेवधन्वानि तन्मसि १६ ।
५४ ॥ अस्मिन्महत्यर्णवेन्तरिक्षे भवाऽअधि । तेषाᳬं सह-
स्रयोजनेव धन्वानि तन्मसि १६ । ५५ ॥ नीलग्रीवाः
शितिकण्ठा दिव˜ रुद्राऽउपश्रिताः । तेषाᳬं सहस्रयोज-
नेवधन्वानितन्मासि १६ । ५६ ॥ नीलग्रीवाः शितिकण्ठाः
शर्वाऽअधःक्षमाचराः । तेषाᳬं सहस्रयोजनेवधन्वानि
तन्मसि १६ । ५७ ॥ ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा वि-

विलोहिताऽ। तेषाᳬ सहस्रयोजनेवधन्वानितन्मसि १६।५८॥ ये भूतानामधिपतयो विशिखासः कपर्दिनः । तेषाᳬ सहस्रयोजनेवधन्वानितन्मसि । १६ । ५९ ॥ ये पथाम्पथिरक्षयऽऐलबृदाऽआयुर्युधः । तेषा ᳬ सहस्रयोजनेव धन्वानितन्मसि १६ । ६० ॥ ये तीर्त्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः । तेषाᳬसहस्रयोजनेवधन्वानि तन्मसि १६ । ६१ ॥ येन्नेषु विविद्ध्यन्ति पात्रेषु पिबतो जनान् । तेषाᳬ सहस्रयोजनेवधन्वानितन्मसि १६ । ६२॥ यऽएतावन्तश्श्च भूयाᳬ सश्च दिशो रुद्रा वितस्थिरे । तेषाᳬ सहस्रयोजनेवधन्वानितन्मसि १६ । ६३ ॥ नमोस्तु रुद्रेभ्यो ये दिवियेषां वर्षमिषवः । तेभ्यो दशप्राचीर्दशदाक्षिणा दशम्प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमोऽअस्तु ते नो वन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्श्च नो द्वेष्टितमेषाञ्जम्भे दध्मः १६ ।६४॥ नमोस्तु रुद्रेभ्यो येन्तरिक्षे येषां वातऽइषवः तेभ्यो दशप्राचीर्दशदक्षिणा दशम्प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः । तेभ्यो नमोऽअस्तु ते नो वन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्श्च नो द्वेष्टितमेषाञ्जम्भे दध्मः १६ । ६५ ॥ नमोस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः । तेभ्यो दशप्राचीर्दशदाक्षिणा दशप्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः । तेभ्यो नमोऽअस्तु ते नोवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्श्च नो द्वेष्टितमेषाञ्जम्भे दध्मः ।१६। ६६॥ इति रुद्राभिषे० पञ्चमोऽध्यायः॥

हरि ॐ—वयᳯसोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तऽसचेमहि । ३ । ५६ ॥ एषते रुद्रभागः सहस्वस्राम्बिकया । तञ्जुषस्व स्वाहैषते रुद्र भागऽआखुस्ते पशुः । ३ । ५७ ॥ अव रुद्रमदीमह्यव देवन्त्र्यम्बकम् । यथा नो वस्यसस्करद्यथा नःश्रेयसस्करद्यथा नो व्यवसा

यर्यात् । ३ । ५८ ॥ भेषजमसि भेषजङ्गवेश्वाय पुरुषाय भेषजम् । सुखम्मेषाय मेष्यै । ३ । ५९ ॥ त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्द्धनम् । उर्व्वारुकमिव बन्धनान्मृत्योर्म्मुक्षीय मामृतात् । त्र्यम्बकं यजामहे सुगन्धिम्पतिवेदनम् । उर्व्वारुकमिव बन्धनादितो मुक्षीयमामुतः । ३ । ६० ॥ एतत्ते रुद्रावसन्तेन परो मूजवतोतीहि । अवततधन्वा पिनाकावसः कृत्तिवासा अहिंसन्नः शिवोतीहि । ३ । ६१ ॥ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम् ३ । ६२॥ शिवो नामासि स्वधितिस्ते पिता नमस्तेऽअस्तु मा माहिंसीः । निवर्त्तयाम्म्यायुषेन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ३ । ६३ ॥

इति रुद्राभिषेककर्म्मणि षष्ठोऽध्यायः ॥

हरिः ॐ—उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च । सासह्वाँश्चाभियुग्वा च विक्षिपः स्वाहा । ३९ । ७ ॥ अग्निं हृदयेनाशनिं हृदयाग्रेण पशुपतिङ्कृत्स्नहृदयेन भवं यक्ना । शर्व्वम्मतस्नाभ्यामीशानम्मन्युना महादेवमन्तःपर्शव्येनोग्रन्देवं वनिष्ठुना वसिष्ठहनुः शिङ्गीनि कोश्याभ्याम् ३९ । ८ ॥ उग्रं लोहितेन मित्रं सौव्रत्येन रुद्रन्दौर्व्रत्येनेन्द्रम्प्रक्रीडेन मरुतो बलेन साध्यान्प्रमुदा । भवस्य कण्ठ्यं रुद्रस्यान्तःपार्श्व्यम्महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत् ३९ । ९ ॥ लोमभ्यः स्वाहा । लोमभ्यः स्वाहा त्वचे स्वाहा त्वचे स्वाहा लोहिताय स्वाहा लोहिताय स्वाहा मेदोभ्यः स्वाहा मेदोभ्यः स्वाहा । माꣳसेभ्यः स्वाहा माꣳसेभ्यः स्वाहा स्नावभ्यः स्वाहा स्नावभ्यः स्वाहा स्थभ्यः स्वाहा स्थभ्यः स्वाहा

मुज्जभ्यः स्वाहा मुज्जभ्यः स्वाहा । रेतसे स्वाहा पायवे स्वाहा । ३९ । ४० ॥ आयासाय स्वाहा प्रायासाय स्वाहा संयासाय स्वाहा वियासाय स्वाहोद्यासाय स्वाहा । शुचे स्वाहा शोचते स्वाहा शोचमानाय स्वाहा शोकाय स्वाहा । ३९ ।४१ ॥ तपसे स्वाहा तप्यते स्वाहा तप्यमानाय स्वाहा तप्ताय स्वाहा घर्माय स्वाहा। निष्कृत्यै स्वाहा प्रायश्चित्त्यै स्वाहा भेषजाय स्वाहा ।३९।४२॥ यमाय स्वाहान्तकाय स्वाहा मृत्यवे स्वाहा । ब्रह्मणे स्वाहा ब्रह्महत्यायै स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा द्यावापृथिवीभ्या ँ स्वाहा ।३९।४३॥इति रुद्रे सप्तमोऽध्यायः ॥

अथ 'रुद्रेऽष्टमोऽध्यायः' । हरिः ॐ वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे स्वश्च मे यज्ञेन कल्पन्ताम् १८। १॥ प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तं च मऽआधीतं च मे वाक् च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च मे यज्ञेन कल्पन्ताम् १८। २ ॥ ओजश्च मे सहश्च मऽआत्मा च मे तनूश्च मे शर्म्म च मे वर्म्म च मेऽङ्गानि च मेऽस्थीनि च मे परूꣳषि च मे शरीराणि च मऽआयुश्च मे जरा च मे यज्ञेन कल्पन्ताम् १८।३॥ ज्यैष्ठ्यं च मऽआधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्षिमा च मे द्राघिमा च मे वृद्धं च मे वृद्धिश्च मे यज्ञेन कल्पन्ताम् । १८। ४ ॥ सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे विश्वं च मे महश्च मे क्रीडा च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे यज्ञेन कल्पन्ताम् १८। ५ ॥ ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च

मे नमित्रश्च मे भयश्च मे सुखञ्च मे शयनञ्च मे सूषाश्च मे सुदिनञ्च मे यज्ञेन कल्पन्ताम् १८। ६॥ यन्ता च मे धर्त्ता च मे क्षेमश्च मे धृतिश्च मे विश्वञ्च मे महश्च मे संविच्च मे ज्ञात्रञ्च मे सूश्च मे प्रसूश्च मे सीरञ्च मे लयश्च मे यज्ञेन कल्पन्ताम् १८।७॥ शञ्च मे मयश्च मे प्रियञ्च मेनुकामश्च मे कामश्च मे सौमनसश्च मे भगश्च मे द्रविणञ्च मे भद्रञ्च मे श्रेयश्च मे वसीयश्च मे यशश्च मे यज्ञेन कल्पन्ताम् १८।८॥ ऊर्क्च मे सूनृता च मे पयश्च मे रसश्च मे घृतञ्च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रञ्च मऽऔद्भिद्यञ्च मे यज्ञेन कल्पन्ताम्। १८।९॥ रयिश्च मे रायश्च मे पुष्टञ्च मे पुष्टिश्च मे विभु च मे प्रभु च मे पूर्णञ्च मे पूर्णतरञ्च मे कुयवञ्च मे क्षितञ्च मेऽन्नञ्च मे क्षुच्च मे यज्ञेन कल्पन्ताम् १८। १०॥ वित्तञ्च मे वेद्यञ्च मे भूतञ्च मे भविष्यच्च मे सुगञ्च मे सुपत्थ्यञ्च मऽऋद्धञ्च मऽऋद्धिश्च मे क्लृप्तञ्च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे यज्ञेन कल्पन्ताम् १८। ११ ॥ व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम् १८। १२॥ अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यञ्च मेऽयश्च मे श्यामञ्च मे लोहञ्च मे सीसञ्च मे त्रपु च मे यज्ञेन कल्पन्ताम् १८ । १३ ॥ अग्निश्च मऽआपश्च मे वीरुधश्च मऽओषधयश्च मे कृष्टपच्याश्च मे कृष्टपच्याश्च मे ग्राम्याश्च मे पशवऽआरण्याश्च मे वित्तञ्च मे वित्तिश्च मे भूतञ्च मे भूतिश्च मे यज्ञेन कल्पन्ताम् १८। १४॥ वसु च मे वसतिश्च मे कर्म्म च मे शक्तिश्च मेऽर्थश्च मऽएमश्च मऽइत्या च मे गतिश्च मे यज्ञे

नं कल्पन्ताम् १८ । १५ ॥ अग्निश्च मऽइन्द्रश्च मे सोमश्च मऽइन्द्रश्च मे सविता च मऽइन्द्रश्च मे सरस्वती च मऽइन्द्रश्च मे पूषा च मऽइन्द्रश्च मे बृहस्पतिश्च मऽइन्द्रश्च मे यज्ञेन कल्पन्ताम् १८।१६॥ मित्रश्च मऽइन्द्रश्च मे वरुणश्च मऽइन्द्रश्च मे धाता च मऽइन्द्रश्च मे त्वष्टा च मऽइन्द्रश्च मे मरुतश्च मऽइन्द्रश्च मे विश्वे च मे देवाऽइन्द्रश्च मे यज्ञेन कल्पन्ताम् १८ । १७ ॥ पृथिवी च मऽइन्द्रश्च मेन्तरिक्षञ्च मऽइन्द्रश्च मे द्यौश्च मऽइन्द्रश्च मे समाश्च मऽइन्द्रश्च मे नक्षत्राणि च मऽइन्द्रश्च मे दिशश्च मऽइन्द्रश्च मे यज्ञेन कल्पन्ताम् १८ । १८ ॥ अंशुश्च मे रश्मिश्च मे दाभ्यश्च मेधिपतिश्च मऽउपांशुश्च मेन्तर्यामश्च मऽऐन्द्रवायवश्च मे मैत्रावरुणश्च मऽआश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च मे यज्ञेन कल्पन्ताम् १८ । १९ ॥ आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च मऽऐन्द्राग्नश्च मे महावैश्वदेवश्च मे मरुत्वतीयाश्च मे निष्केवल्यश्च मे सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च मे हारियोजनश्च मे यज्ञेन कल्पन्ताम् १८ । २० ॥ स्रुचश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्च मे धिषवणे च मे पूतभृच्च मऽआधवनीयश्च मे वेदिश्च मे बर्हिश्च मेवभृथश्च मे स्वगाकारश्च मे यज्ञेन कल्पन्ताम् १८ । २१ ॥ अग्निश्च मे घर्म्मश्च मेर्कश्च मे सूर्यश्च मे प्राणश्च मेश्वमेधश्च मे पृथिवी च मे दितिश्च मेदितिश्च मे द्यौश्च मेङ्गुलयःशक्करयो दिशश्च मे यज्ञेन कल्पन्ताम् १८ । २२ व्रतञ्च मऋतवश्च मे तपश्च मे संवत्सरश्च मेहोरात्रेऽऊर्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन कल्पन्ताम् १८ । २३ ॥ एका च मे तिस्रश्च मे तिस्रश्च

मे पञ्च च मेपञ्च च मे सप्त च मे सप्त च मे नव च मे नव च मऽएकादश च मऽएकादश च मे त्रयोदश च मे त्रयोदश च मे पञ्चदश च मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे नवदश च मे नवदश च मऽएकविꣳशतिश्च मऽएकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे त्रयोविꣳशतिश्च मे पञ्चविꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च मे नवविꣳशतिश्च मऽएकत्रिꣳशच्च मऽएकत्रिꣳशच्चमे त्रयस्त्रिꣳशच्च मे यज्ञेन कल्पन्ताम् १८ । २४ ॥ चतस्रश्च मेऽष्टौ च मेऽष्टौ च मे द्वादश च मे द्वादश च मे षोडश च मे षोडश च मे विꣳशतिश्च मे विꣳशतिश्च मे चतुर्विꣳशतिश्च मे चतुर्विꣳशतिश्च मेऽष्टाविꣳशतिश्च मेऽष्टाविꣳशतिश्च मे द्वात्रिꣳशच्च मे द्वात्रिꣳशच्च मे षट्त्रिꣳशच्च मे षट्त्रिꣳशच्च मे चत्वारिꣳशच्च मे चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मे चतुश्चत्वारिꣳश मेऽष्टाचत्वारिꣳशच्च मे यज्ञेन कल्पन्ताम् । १८ । २५ ॥ त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्य्यवाट् च मे तुर्य्यौही च मे यज्ञेन कल्पन्ताम् ॥ १८ । २६ ॥ पृष्ठवाट् च म पष्ठौही च मऽउक्षा च मे वशा च मऽऋषभश्च मे वेहच्च मेनड्वाँश्च मे धेनुश्च मे यज्ञेन कल्पन्ताम् ।१८।२७॥ वाजाय स्वाहा प्रसवाय स्वाहा पिजाय स्वाहा क्रतवे स्वाहा वसवे स्वाहा हर्प्पतये स्वाहाह्ने मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहा विनꣳशिनऽआन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा प्रजापतये स्वाहा । इयन्ते राण्मित्राय यन्तासि यमनऽऊर्ज्जे त्वा वृष्ट्यै त्वा प्रजानान्त्वाधिपत्याय १८ ॥ २८ ॥

आयुर्य्यज्ञेन कल्पताम्प्राणो यज्ञेन कल्पताञ्चक्षुर्य्यज्ञेन कल्पताᳬं श्रोत्रं यज्ञेन कल्पतां वाग्यज्ञेन कल्पताम्मनो यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां ब्रह्मा यज्ञेन कल्पताञ्ज्योतिर्य्यज्ञेन कल्पताᳬं स्वर्य्यज्ञेन कल्पताम्पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम्। स्तोमश्च यजुश्च ऽऋक्च साम च बृहच्च रथन्तरञ्च। स्वर्द्देवाऽअगन्मामृताऽअभूमम्प्रजापतेः प्रजाऽ अभूम वेट् स्वाहा १८ ॥२९॥ इति रुद्राभिषेककर्म्मणि अष्टमोऽध्यायः ॥

हरिः ॐ—ऋचं वाचम्प्रपद्ये मनो यजुः प्रपद्ये सामप्प्राणम्प्रपद्ये चक्षुः श्रोत्रम्प्रपद्ये। वागोजः सहौजो मयि प्राणापानौ ३६। १॥ यन्मे छिद्रञ्चक्षुषो हृदयस्य मनसो वातितृण्णम्बृहस्पतिर्म्मे तद्दधातु शन्नो भवतु भुवनस्य यस्पतिः ३६। २॥ भूर्भुवः स्वः तत्सवितुर्वरेण्यं० ३६। ३॥ कया नश्चित्रऽआभुव दूती सदा वृधः सखा। कया शचिष्ठया वृता। ३६। ४॥ कस्त्वा सत्यो मदानाम्मᳬंहिष्ठो मत्सदन्धसः। दृढाचिदारुजे वसु ३६। ५॥ अभीषुणः सखीनामविता जरितॄणाम्। शतम्भवास्यूतिभिः ३६। ६॥ कया त्वन्नऽऊत्याभिप्रमन्दसे वृषन्। कयास्तोतृभ्यऽआभर ३६। ७॥ इन्द्रो विश्वस्य राजति। शन्नोऽअस्तु द्विपदे शञ्चतुष्पदे। ३६।८॥ शन्नो मित्रः शं वरुणः शन्नो भवत्वर्य्यमा। शन्नऽइन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः। ३६। ९॥ शन्नो वातः पवताᳬं शन्नस्तपतु सूर्य्यः। शन्नः कनिक्रदद्देवः पर्ज्जन्योऽअभिवर्षतु। ३६। १०॥ अहानि शम्भवन्तु नः शᳬं रात्रीः प्रतिधीयताम्। शन्नऽइन्द्राग्नी भवतामवोभिः शन्नः

१ भूर्भुवःस्वरित्यधिकम्। व्याहृतिविहीनस्यैव मन्त्रस्य सत्त्वात्।

इन्द्रा वरुणा रातहव्या । शन्नऽइन्द्रा पूषणा व्वाजसातौ शमिन्द्रा सोमा सुवितायु शं य्योः । ३६ । ११ ॥ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शं य्योरभिस्रवन्तु नः ३६ । १२ ॥ स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म्म सप्प्रथाः । ३६ । १३ ॥ आपो हि ष्ठामयोभुवस्तानऽऊर्ज्जे दधातन । महेरणाय चक्षसे । ३६ । १४ ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिवमातरः ३६ । १५ ॥ तस्म्माऽअरङ्गमामवो यस्य क्षयाय जिन्न्वथ । आपो जनयथा च नः । ३६ । १६ ॥ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । व्वनस्प्पतयः शान्तिर्व्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्व्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि । ३६ । १७ ॥ दृते दृꣳह मा मित्रस्य मा चक्षुषा सर्व्वाणि भूतानि समीक्षन्ताम् । मित्रस्याहञ्चक्षुषा सर्व्वाणि भूतानि समीक्षे । मित्रस्य चक्षुषा समीक्षामहे ३६ । १८ ॥ दृते दृꣳह मा । ज्ज्योक्ते सन्दृशि जीव्यासं ज्ज्योक्ते सन्दृशि जीव्यासम् ३६ । १९ ॥ नमस्ते हरसे शोचिषे नमस्तेऽअस्त्वर्च्चिषे । अन्याँस्तेऽअस्म्मत्तपन्तु हेतयः पावकोऽअस्म्मभ्यꣳ शिवो भव ३६ । २० ॥ नमस्तेऽअस्तु व्विद्युते नमस्ते स्तनयित्नवे । नमस्ते भगवन्नस्तु यतः स्वः समीहसे ३६ । २१ ॥ यतो यतः समीहसे ततो नोऽअभयङ्कुरु । शन्नः कुरु प्प्रजाभ्योऽभयन्नः पशुभ्यः ३६ । २२ ॥ सुमित्रियानऽआपऽओषधयः सन्तु दुर्म्मित्रियास्तस्म्मै सन्तु योऽस्म्मान्द्वेष्टि यञ्च वयन्द्विष्म्मः । ३६ । २३ ॥ तच्चक्षुर्द्देवहितम्पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतञ्जीवेम शरदः शतꣳ शृणुयाम शरदः शतम्प्रब्रवाम शरदः

१ शरद इति । संवत्सरानित्यर्थः । तथा च शताब्दावधीति विवक्षितम् ।

शतमदीनाऽस्याम शरदः शतम्भूयश्च शरदः शतात् ३६। २४ ॥ इति रुद्राभिषेककर्म्मणि शान्त्यध्यायः ॥

ॐस्वस्ति नऽइन्द्रो० ३५। १९ ॥ पय ÷ पृथिव्याम् ३८। ३६ ॥ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवे भवे नाति भवे भवस्वमां भवोद्भवाय नमः ३८।३॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो।३८।४ ॥ बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः। ३८। ५॥ अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्यः सर्व शर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ३८। ६ ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात् ३८। ७॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्। ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ३८।८॥ ॐ सर्वेषां वाऽएव वेदाना ꣳ रसो यत्साम सर्वेषामेवैनमेतद्वेदानाꣳ रसेनाभिषिञ्चति ३८।९॥ ॐ शान्तिः शान्तिः सुशान्तिर्भवतु। सर्वारिष्टशान्तिर्भवतु॥ इति रुद्राभिषेकपद्धतिः।

अथ गणेशाथर्वशीर्षम्—ॐ नमस्ते गणपतये।त्वमेव प्रत्यक्षं तत्त्वमसि। त्वमेव केवलं कर्त्तासि।त्वमेव केवलं धर्त्तासि।त्वमेव केवलं हर्त्तासि।त्वमेव सर्वं खल्विदं ब्रह्मासि। त्वं साक्षादात्मासि नित्यम्। ऋतं वच्मि। सत्यंवच्मि।अव त्वं माम्। अव वक्तारम्।अव श्रोतारम्।अव दातारम्।अव धातारम्। अवानूचानमव शिष्यम्।अव पश्चात्तात्। अव पुरस्तात्। अवोत्तरात्तात्। अव दक्षिणात्तात्। अव चोर्ध्वात्तात्। अवाधरात्तात्। सर्वतो मां पाहि पाहि समन्तात्। त्वं वाङ्मयस्त्वं चिन्मयः। त्वं सच्चिदानन्दाद्वितीयोऽसि। त्वं प्रत्यक्षं ब्रह्मासि। । त्वं ज्ञानमयो विज्ञानमयोऽसि। सर्वं जगदिदं त्वत्तो जायते। सर्वं जगदिदं त्वत्तस्तिष्ठति। सर्वं जगदिदं त्वयि लयमेष्यति। सर्वं जगदिदं त्वयि प्रत्येति। त्वं भूमिरापोऽनलोऽनिलो नभः। त्वं चत्वारिवाक् पदानि

त्वं गुणत्रयातीतः । त्वं देहत्रयातीतः । त्वं कालत्रयातीतः । त्वमवस्थात्रयातीतः । त्वं मूलाधारस्थितोऽसि नित्यम् । त्वं शक्तित्रयात्मकः । त्वां योगिनो ध्यायन्ति नित्यम् । त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्मभूर्भुवः स्वरोम् । गणादीन्पूर्वमुच्चार्य वर्णादींस्तदनन्तरम् । अनुस्वारः परतरः । अर्धेन्दुलसितम् । तारेण रुद्धम् । एतत्तव मनुस्वरूपम् । गकारः पूर्वरूपम् । अकारो मध्यमरूपम् । अनुस्वारश्चान्त्यरूपम् । बिन्दुरुत्तररूपम् । नादः सन्धानम् । सꣳहिता सन्धिः । सैषा गणेशविद्या । गणक ऋषिः । निचृद्गायत्री छन्दः । गणपतिर्देवता । ॐ गं गणपतये नमः । एकदन्ताय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात् । एकदंतं चतुर्हस्तं पाशमङ्कुशधारिणम् । रदञ्च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् । रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् । रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् । भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् । आविर्भूतञ्च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् । एवं ध्यायति यो नित्यं स योगी योगिनां वरः । नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय श्रीवरदमूर्त्तये नमः । एतदथर्वशीर्षं योऽधीते । स ब्रह्मभूयाय कल्पते । स सर्वविघ्नैर्न बाध्यते । स सर्वतः सुखमेधते । स पञ्चमहापापात्प्रमुच्यते । सायमधीयानो दिवसकृतं पापं नाशयति । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायम्प्रातः प्रयुञ्जानो अपापो भवति । सर्वत्राधीयानोऽपविघ्नो भवति । धर्ममर्थं कामं मोक्षञ्च विन्दति । इदमथर्वशीर्षमशिष्याय न देयम् । यो यदि मोहाद्दास्यति । स पापीयान् भवति । सहस्रावर्त्तनाद्यं यं काममधीते । तं तमनेन साधयेत् । अनेन गणपतिमभिषिञ्चति । स वाग्मी भवति । चतुर्थ्यामनश्नञ्जपति । स विद्यावान् भवति । इत्यथर्वणवाक्यम् । ब्रह्माद्यावरणं विद्यान्न बिभेति कदाचनेति । यो दूर्वाङ्कुरैर्यजति । स वैश्रवणोपमो भवति । यो लाजैर्यजति । स यशोवान् भवति । स मेधावान् भवति । यो मोदकसहस्रेण यजति । स वांछितफलमवाप्नोति । यः साज्यसमिद्भिर्यजति । स सर्वं लभते स सव लभते । अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा । सूर्यवर्चस्वी भवति ।

१ एतदिति । इत्येवं सूचितमोङ्काररूपम् ।

सूर्यग्रहे महानद्यां प्रतिमासन्निधौ वा जप्त्वा। सिद्धमन्त्रो भवति। महाविघ्नात्प्रमुच्यते। महादोषात्प्रमुच्यते। महाप्रत्यवायात्प्रमुच्यते। स सर्वविद्भवति स सर्वविद्भवति। य एवं वेद। इत्युपनिषत्। ॐ शान्तिः शान्तिः शान्तिः॥ इति गणेशाथर्वशीर्षम्॥

**अथ नारायणाथर्वशीर्षम्,**—अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति। नारायणात्प्राणो[1] जायते। मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी। नारायणाद्ब्रह्मा जायते। नारायणाद्विष्णुर्जायते। नारायणाद्रुद्रो जायते। नारायणादिन्द्रो जायते। नारायणात्प्रजापतिः प्रजायते। नारायणाद्द्वादशादित्या रुद्रा वसवः सर्वाणि छन्दांसि। नारायणादेवाः समुत्पद्यन्ते। नारायणात्प्रवर्तन्ते। नारायणे प्रलीयन्ते। अथादित्यो नारायणः। ब्रह्मा नारायणः। शिवश्च नारायणः। शक्रश्च नारायणः। कालश्च नारायणः। दिशश्च नारायणः। ऊर्ध्वं च नारायणः। अधश्च नारायणः। अन्तर्बहिश्च नारायणः। नारायण एवेदꣳसर्वं यद्भूतं यच्च भाव्यम्। निष्कलो निरञ्जनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित्। य एवं वेद। स विष्णुरेव भवति स विष्णुरेव भवति। ॐ इत्यग्रे व्याहरेत्। नम इति पश्चात्। नारायणायेत्युपरिष्टात्। ॐ इत्येकाक्षरम्। नम इति द्वे अक्षरे। नारायणायेति पञ्चाक्षराणि। एतद्वै नारायणस्याष्टाक्षरं पदम्। यो ह वै नारायणस्याष्टाक्षरं पदमध्येति। अनुपब्रवः सर्वमायुरेति। विन्दते प्रजां रायस्पोषं गौपत्यम्। ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत इति। प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपम्। अकार उकारो मकार इति। तानेकधा संयोज्य तदेव तदोमिति। यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात्। ॐ नमो नारायणायेति मन्त्रोपासकः। वैकुण्ठभुवनं गच्छति। तदिदं परमं पुण्डरीकं विज्ञानघनम्। तस्मात्तडिदाभमात्रम्। ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः। सर्वभूतस्थमेकं वै नारायणम्। कारणरूपं परब्रह्मकम्। एतदथर्वशीर्षं योऽधीते। सायमधीयानो दिवसकृतं पापं नाशयति। प्रातरधीयानो रात्रिकृतं पापं नाशयति। सायंप्रातः प्रयुञ्जानो अपापो भवति। मध्यन्दिनमादित्याभिमुखोऽधीयानः। सद्यः

---

१ अत्र प्राणपदमपानादेरप्युपलक्षकम्।

पञ्चमहापातकोपपातकेभ्यो मुच्यते । सर्ववेदपारायणपुण्यं लभते । श्रीनारायणसा-युज्यमवाप्नोति । य एवं वेद । इत्युपनिषत् ॥ इति नारायणाथर्वशीर्षम् ॥

अथ शिवाथर्वशीर्षम्—ॐ देवा ह वै स्वर्गलोकमायंस्ते रुद्रमपृच्छन् को भवानिति । सोऽब्रवीदहमेकः प्रथममासोद्वर्तामि च भविष्यामि च नान्यः कश्चि-न्मत्तो व्यतिरिक्त इति । सोऽन्तरादन्तरं प्राविशद्दिशश्चान्तरं प्राविशत्सोऽहं नित्यानित्यो व्यक्ताव्यक्तो ब्रह्माब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणाञ्च उदञ्चोऽहमधश्चो-र्ध्वश्चाहं दिशश्च प्रतिदिशश्चाहं पुमानपुमान् स्त्रियश्चाहं सावित्र्यहं गायत्र्यहं त्रिष्टुप्जगत्यनुष्टुप् चाहं छन्दोऽहं सत्योऽहं गार्हपत्यो दक्षिणाग्निराहवनीयोऽहं गौरहं गौर्यहमृगहं यजुरहं सामाहमथर्वाङ्गिरसोऽहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमा-पोऽहं तेजोऽहं गुह्योऽहमरण्योऽहमक्षरमहं क्षरमहं पुष्करमहं पवित्रमहमुग्रश्च बलिश्च पुरस्ताज्ज्योतिरित्यहमेव सर्वेभ्यो मामेव स सर्वः समो यो मां वेद स देवान्वेद सर्वांश्च वेदान् साङ्गानपि ब्रह्मब्राह्मणैश्च गां गोभिर्ब्राह्मणान् ब्राह्मणेन हविर्हविषा आयुरायुषा सत्यं सत्येन धर्मेण धर्मं तर्पयामि स्वेन तेजसा । ततो ह वै ते देवा रुद्रमपृच्छन् ते देवा रुद्रमपश्यन् ते देवा रुद्रमध्यायन् ते देवा ऊर्ध्वबाहवो रुद्रं स्तुवन्ति । ॐ यो वै रुद्रः स भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः । यो वै रुद्रः स भगवान् यश्च विष्णुस्तस्मै ० । यो वै रुद्रः स भगवान् यश्च स्कन्द-स्तस्मै ० । यो वै रुद्रः स भगवान् यश्चेन्द्रस्तस्मै० । यो वै रुद्रः स भगवान् यश्चाग्निस्तस्मै ० । यो वै रुद्रः स भगवान् यश्च वायुस्तस्मै ० । यो वै रुद्रः स भगवान् यश्च सूर्यस्तस्मै० । यो वै रुद्रः स भगवान् यश्च सोमस्तस्मै० । यो वै रुद्रः स भगवान् येऽष्टौ ग्रहास्तस्मै० । यो वै रुद्रः स भगवान् ये चाष्टौ प्रतिग्रहास्तस्मै० । यो वै रुद्रः स भगवान् यच्च भूस्तस्मै० । यो वै रुद्रः स भगवान् यच्च भुवस्तस्मै० । यो वै रुद्रः स भगवान् यच्च स्वस्तस्मै० । यो वै रुद्रः स भगवान् यच्च महस्तस्मै० । यो वै रुद्रः स भगवान् या च पृथिवी तस्मै० । यो वै रुद्रः स भगवान् यच्चान्तरिक्षं तस्मै० । यो वै रुद्रः स भगवान् या च द्यौस्तस्मै० । यो वै रुद्रः स भगवान् याश्चाप-स्तस्मै० । यो वै रुद्रः स भगवान् यच्च तेजस्तस्मै० । यो वै रुद्रः स भगवान् यश्च कालस्तस्मै० । यो वै रुद्रः स भगवान् यश्च यमस्तस्मै० । यो वै रुद्रः स

भगवान् यश्च मृत्युस्तस्मै० । यो वै रुद्रः स भगवान् यच्चामृतं तस्मै० । यो वै रुद्रः स भगवान् यच्चाकाशं तस्मै० । यो वै रुद्रः स भगवान् यच्च विश्वं तस्मै० । यो वै रुद्रः स भगवान् यच्च स्थूलं तस्मै । यो वै रुद्रः स भगवान् यच्च सूक्ष्मं तस्मै० । यो वै रुद्रः स भगवान् यच्च शुक्लं तस्मै० । यो वै रुद्रः स भगवान् यच्च कृष्णं तस्मै० । यो वै रुद्रः स भगवान् यच्च कृत्स्नं तस्मै । यो वै रुद्रः स भगवान् यच्च सत्यं तस्मै० । यो वै रुद्रः स भगवान् यच्च सर्वं तस्मै० । भूस्ते आदिर्मध्यं भुवस्ते स्वस्ते शीर्षं विश्वरूपोऽसि ब्रह्मैकस्त्वं द्विधा त्रिधा वृद्धिस्त्वं शान्तिस्त्वं पुष्टिस्त्वं हुतमहुतं दत्तमदत्तं सर्वमसर्वं विश्वमविश्वं कृतमकृतं परमपरं परायणञ्च त्वम्। अपामसोमममृता अभूमागन्म ज्योतिरविदाम देवान् । किं नूनमस्मान् कृणवदरातिः किमु धूर्तिरमृतं मर्त्यस्य सोमसूर्यपुरस्तात्सूक्ष्मः पुरुषः । सर्वं जगद्धितं वा एतदक्षरं प्राजापत्यं सौम्यं सूक्ष्मं पुरुषं ग्राह्यमग्राह्येण भावं भावेन सौम्यं सौम्येन सूक्ष्मं सूक्ष्मेण वायव्यं वायव्येन ग्रसति तस्मै महाग्रासाय वै नमो नमः । हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः । हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तु सः ॥ तस्योत्तरतः शिरो दक्षिणतः पादौ य उत्तरतः स ओङ्कारः य ओङ्कारः स प्रणवः यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽनन्तः योऽनन्तस्तत्तारं यत्तारं तच्छुक्लं यच्छुक्लं तत्सूक्ष्मं यत्सूक्ष्मं तद्वैद्युतं यद्वैद्युतं तत्परं ब्रह्म यत् परं ब्रह्म स एकः य एकः स रुद्रः यो रुद्रः स ईशानः य ईशानः स भगवान् महेश्वरः । अथ कस्मादुच्यते ओङ्कारः[1] । यस्मादुच्चार्यमाण एव प्राणानूर्ध्वमुत्क्रामयति तस्मादुच्यते ओङ्कारः। अथ कस्मादुच्यते प्रणवः यस्मादुच्चार्यमाण एव ऋग्यजुः सामाथर्वाङ्गिरसंब्रह्मब्राह्मणेभ्यः प्रणामयति नामयति च तस्मादुच्यते प्रणवः । अथ कस्मादुच्यते सर्वव्यापी यस्मादुच्चार्यमाण एव यथा स्नेहेन पललपिण्डमिव शान्तरूपमोतप्रोतमनुप्राप्तो व्यतिषक्तश्च तस्मादुच्यते सर्वव्यापी । अथ कस्मादुच्यतेऽनन्तः यस्मादुच्चार्यमाण एव तिर्यगूर्ध्वमधस्ताच्चास्यान्तो नोपलभ्यते तस्मादुच्यतेऽनन्तः । अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्मव्याधिजरामरणसंसारमहाभयात्तारयति त्रायते च तस्मादुच्यते तारम् । अथ कस्मादुच्यते शुक्लं यस्मादुच्चार्यमाण एव क्लन्दते क्लामयति च तस्मादुच्यते शुक्लम् । अथ कस्मादुच्यते सूक्ष्मं

---

१ ओङ्कारपदार्थं स्पष्टयितुमयं प्रश्नः ।

यस्मादुच्चार्यमाण एव सूक्ष्मो भूत्वा शरीराण्यधितिष्ठति सर्वाणि चाङ्गान्यभिमृश्यति तस्मादुच्यते सूक्ष्मम् । अथ कस्मादुच्यते वैद्युतम् । यस्मादुच्चार्यमाण एव व्यक्ते महति तमसि द्योतयति तस्मादुच्यते वैद्युतम् । अथ कस्मादुच्यते परं ब्रह्म यस्मात् परमपरं परायणञ्च बृहद्‌बृहत्या बृंहयति तस्मादुच्यते परं ब्रह्म । अथ कस्मादुच्यते एकः यः सर्वान् प्राणान् सम्भक्ष्य सम्भक्षणेनाजः संसृजति विसृजति तीर्थमेके व्रजन्ति तीर्थमेके दक्षिणाः प्रत्यञ्च उदञ्चः प्राञ्चोऽभिव्रजन्त्येके तेषां सर्वेषामिह सङ्गतिः साकं स एकोऽभूदन्तश्चरति प्रजानां तस्मादुच्यते एकः । अथ कस्मादुच्यते रुद्रः यस्मादृषिभिर्नान्यैर्भक्तैर्द्रुतमस्य रूपमुपलभ्यते तस्मादुच्यते रुद्रः । अथ कस्मादुच्यते ईशानः यः सर्वान्देवानीशते ईशानीभिर्जननीभिश्च शक्तिभिः । अभित्वा शूर नोनुमो दुग्धा इव धेनवः ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुष इति तस्मादुच्यते ईशानः । अथ कस्मादुच्यते भगवान् महेश्वरः यस्माद्भक्तान् ज्ञानेन भजत्यनुगृह्णाति च वाचं संसृजति विसृजति च सर्वान् भावान्परित्यज्यात्मज्ञानेन योगैश्वर्येण महति महीयते तस्मादुच्यते भगवान् महेश्वरः । तदेतद्रुद्रचरितम् । एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः । स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः । एको रुद्रो न द्वितीयाय[1] तस्मै य इमाँल्लोकानीशत ईशनीभिः । प्रत्यङ्जनास्तिष्ठति चान्तकाले संसृज्य विश्वाभुवनानि गोप्ता ॥ यो योनिं योनिमधितिष्ठत्येको येनेदं सर्वं विचरति सर्वम् । तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति । क्षमां हित्वा हेतुजालस्य मूलं बुद्ध्या सञ्चितं स्थापयित्वा तु रुद्रे । रुद्रमेकत्वमाहुः शाश्वतं वै पुराणमिषमूर्जेण पशवोनुनामयन्तं मृत्युपाशान् । तदेतेनात्मन्नेतेनार्धचतुर्थेन मात्रेण शान्तिं संसृजति पशुपाशविमोक्षणं या सा प्रथमा मात्रा ब्रह्मदेवत्या रक्ता वर्णेन यस्तां ध्यायते नित्यं स गच्छेद्ब्रह्मपदम् । या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णवर्णेन यस्तां ध्यायते नित्यं स गच्छेद्वैष्णवं पदम् । या सा तृतीया मात्रा ईशानदेवत्या कपिला वर्णेन यस्तां ध्यायते नित्यं स गच्छेदैशानं पदम् । या सार्धचतुर्थी मात्रा सर्वदेवत्याऽव्यक्तीभूता खं विचरति शुद्धा स्फटिकसन्निभा वर्णेन यस्तां ध्यायते नित्यं स गच्छेत्पदमनामयम् ।

---

१ न द्वितीयायेति समस्तं पदम्, अद्वितीयायेत्यर्थः ।

तदेतदुपासीत मुनयो वाग्वदंति न तस्य ग्रहणमयं पन्था विहित उत्तरेण येन देवा यान्ति येन पितरो येन ऋषयः परमपरं परायणं चेति। बालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातरूपं वरेण्यम्। तमात्मस्थं ये नु पश्यन्ति धीरास्तेषां शान्तिर्भवति नेतरेषाम्। यस्मिन् क्रोधं यांश्च तृष्णां क्षमाञ्चाक्षमां हित्वा हेतुजालस्य मूलम्। बुद्ध्या सञ्चितं स्थापयित्वा तु रुद्रे रुद्रमेकत्वमाहुः। रुद्रो हि शाश्वतेन वै पुराणेनेषमूर्जेण तपसा नियन्ताग्निरिति भस्म वायुरिति भस्म जलमिति भस्म व्योमेति भस्म सर्वं ह वा इदं भस्म मन एतानि चक्षूंषि यस्माद्व्रतमिदं पाशुपतं यद्भस्म नाङ्गानि संस्पृशेत् तस्माद् ब्रह्म तदेतत्पाशुपतं पशुपाशविमोक्षणाय ॥ ९ ॥ योऽग्नौ रुद्रो योऽप्स्वन्तर्य ओषधीर्वीरुध आविवेश। य इमा विश्वा भुवनानि चक्लृपे तस्मै रुद्राय नमोऽस्त्वग्नये। यो रुद्रोऽग्नौ यो रुद्रोऽप्स्वन्तर्यो रुद्र ओषधीर्वीरुध आविवेश। यो रुद्र इमा विश्वा भुवनानि चक्लृपे तस्मै रुद्राय नमोऽस्त्वग्नये। यो रुद्रोऽग्नौ यो रुद्रोऽप्स्वन्तर्यो रुद्र ओषधीर्वीरुध आविवेश। यो रुद्र इमा विश्वा भुवनानि चक्लृपे तस्मै रुद्राय वै नमो नमः। यो रुद्रोऽप्सु यो रुद्र औषधीषु यो रुद्रो वनस्पतिषु। येन रुद्रेण जगदूर्ध्वं धारितं पृथिवी द्विधा त्रिधा धर्त्ता धारिता नागा येन्तरिक्षे तस्मै रुद्राय वै नमो नमः। मूर्धानमस्य संसेव्याप्यथर्वा हृदयञ्च यत्। मस्तिष्कादूर्ध्वं प्रेरयत्यवमानोऽधिशीर्षतः। तद्वा अथर्वणः शिरो देवकोशः समुज्झितः। तत् प्राणोऽभिरक्षति शिरोऽन्तमथो मनः[1]। न च दिवो देवजनेन गुप्ता न चान्तरिक्षाणि न च भूम इमाः। यस्मिन्निदं सर्वमोतप्रोतं तस्मादन्यन्न परं किञ्चनास्ति। न तस्मात्पूर्वं न परं तदस्ति न भूतं नोत भव्यं यदासीत्। सहस्रपादेकमूर्ध्ना व्याप्तं स एवेदमावरीवर्ति भूतम्। अक्षरात् सञ्जायते कालः कालाद् व्यापक उच्यते। व्यापको हि भगवान् रुद्रो भोगायमानो यदा शेते रुद्रस्तदा संहार्यते प्रजाः। उच्छसिते तमो भवति तमस आपोऽस्यङ्गुल्या मथिते मथितं शिशिरे शिशिरं मथ्यमानं फेनं भवति फेनादण्डं भवत्यण्डाद्ब्रह्मा भवति ब्रह्मणो वायुः वायोरोङ्कारः ओङ्कारात्सावित्री सावित्र्या गायत्री गायत्र्या लोका भवन्ति। अर्चयन्ति तपःसत्यं मधुक्षरन्ति यद्ध्रुवम्। एतद्धि परमं तपः। आपो ज्योती रसोऽमृतं ब्रह्मभूर्भुवः

१ शिरोऽन्तं शिरोभागावधीत्यर्थः।

स्वरों नम इति ॥ ६ ॥ य इदमथर्वशिरो ब्राह्मणोऽधीते । अश्रोत्रियः श्रोत्रियो भवति । अनुपनीत उपनीतो भवति । सोऽग्निपूतो भवति । स वायुपूतो भवति । स सूर्यपूतो भवति । स सोमपूतो भवति । स सत्यपूतो भवति । स सर्वैर्देवैर्ज्ञातो भवति । स सर्वैर्वेदैरनुध्यातो भवति । स सर्वेषु तीर्थेषु स्नातो भवति । तेन सर्वैः क्रतुभिरिष्टं भवति । गायत्र्याः षष्टिसहस्राणि जप्तानि भवन्ति । प्रणवानामयुतं जप्तं भवति । स चक्षुषः पङ्क्ति पुनाति । आसप्तमात् पुरुषयुगान्पुनातीत्याह भगवानथर्वशिरः सकृज्जप्त्वैव शुचिः स पूतः कर्मण्यो भवति । द्वितीयं जप्त्वा गणाधिपत्यमवाप्नोति । तृतीयं जप्त्वैवमेवानुप्रविशत्यों सत्यमों सत्यमों सत्यम् ॥ इत्यथर्ववेदे शिराथर्वशीर्षम्[1] ॥

**अथ 'सूर्याथर्वशीर्षम्'**–अथ सूर्याथर्वाङ्गिरस व्याख्यास्यामः । ब्रह्मा ऋषिः । आदित्यो देवता । गायत्री छन्दः । हंसाद्यग्निनारायणयुक्तं बीजम् । हृल्लेखा शक्तिः । द्विपदादि सर्गसंयुक्तं कीलकम् । धर्मार्थकाममोक्षेषु जपे विनियोगः । षट्स्वरारूढबीजेन षडङ्गं रक्ताम्बुजसंस्थितं सप्ताश्वरथिनं हिरण्यवर्णं चतुर्भुजं पद्मद्वयाभयवरदहस्तं कालचक्रप्रणेतारं च श्रीसूर्यनारायणं य एवं वेद सवै ब्राह्मणः ॥ ॐ भूः । ॐ भुवः । ॐ स्वः । ॐ महः । ॐ जनः । ॐ तपः । ॐ सत्यम् । ॐ तत्सवि० परोरजसेसावदोम् । ॐ आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् । सूर्य आत्मा जगतस्तस्थुषश्च । सूर्याद्वै खल्विमानि भूतानि जायन्ते । सूर्याद्यज्ञः पर्जन्योऽन्नमात्मा । नमस्ते आदित्याय । त्वमेव केवलं कर्त्तासि । त्वमेव प्रत्यक्षं विष्णुरसि । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं रुद्रोऽसि । त्वमेव प्रत्यक्षमृगसि । त्वमेव प्रत्यक्षं यजुरसि । त्वमेव प्रत्यक्षं सामासि । त्वमेव प्रत्यक्षमथर्वासि । त्वमेव सर्वं छन्दोऽसि । आदित्याद्वायुर्जायते । आदित्याद्भूमिर्जायते । आदित्यादापो जायन्ते । आदित्याज्ज्योम दिशो जायन्ते । आदित्याद्वेदा जायन्ते । आदित्याद्देवा जायन्ते । आदित्यो वा एष एतन्मण्डलं तपति । असावादित्यो ब्रह्म । आदित्योऽन्तःकरणमनोबुद्धिचित्ताहङ्काराः । आदित्यो वै

१ शीर्षपदमुपानिषत्परम् ।

व्यानसमानोदानापानप्राणाः । आदित्यो वै श्रोत्रत्वक्चक्षूरसनानासाः । आदित्यो वै वाक्पाणिपादोपस्थपायूनि । आदित्यो वै शब्दस्पर्शरूपरसगन्धाः । आदित्यो वै वचनादानगमनानन्दविसर्गाः । आनन्दमयो ज्ञानमयो विज्ञानमय आदित्यः । नमो मित्राय भानवे मृत्योर्मा पाहि भ्राजिष्णवे विश्वहेतवे नमः । सूर्यो नो दिवस्पातु वातो अन्तरिक्षात् । अग्निर्नः पार्थिवेभ्यः । सूर्याद्भवंति भूतानि । सूर्येण पालितानि तु सूर्ये लयं प्राप्नुवंति । यः सूर्यः सोऽहमेव च । चक्षुर्नो देवः सविता । चक्षुर्न उत पर्वतः । चक्षुर्धाता दधातु नः । आदित्याय विद्महे सहस्रकराय धीमहि । तन्नः सूर्यः प्रचोदयात् । सविता पश्चात्तात् । सविता पुरस्तात् । सवितोत्तरात्तात् । सविताधरात्तात् । सविता नः सुवतु सर्वतातिम् । सविता नो रासतां दीर्घमायुः । ओमित्येकाक्षरं ब्रह्म । घृणिरिति द्वे अक्षरे । सूर्य इत्यक्षरद्वयम् । आदित्य इति त्रीण्यक्षराणि । एतद्वै सूर्यस्याष्टाक्षरं मनुम् । यः सदाहरहर्जपति । सो ब्रह्मण्यो ब्राह्मणो भवति । सूर्याभिमुखं जप्त्वा महाव्याधिभयात्प्रमुच्यते । अलक्ष्मीर्नश्यति । अभक्ष्यभक्षणात्पूतो भवति । अपेयपानात्पूतो भवति । अगम्यागमनात्पूतो भवति । व्रात्यसम्भाषणात्पूतो भवति । मध्याह्ने सूर्याभिमुखः पठेत् । सद्यः पञ्चमहापापात्प्रमुच्यते । सैषा सावित्री विद्या न कस्यचित्प्रशंसेत् । एतन्महाभागः प्रातः पठति स भाग्यवान् जायते । पशून् विन्दति । वेदार्थं लभते । त्रिकालं जप्त्वा क्रतुशतफलं प्राप्नोति । हस्तादित्ये जपति स महामृत्युं तरति । य एवं वेद । इति सूर्याथर्वशीर्षम्[1] ॥

अथ'देव्यथर्वशीर्षम्'[2]—ॐ सर्वे वै देवा देवीमुपतस्थुः कासि त्वं महादेवी। साब्रवीदहं ब्रह्मस्वरूपिणी । मत्तः प्रकृतिपुरुषात्मकं जगत् । शून्यं चाशून्यं च अहमानंदानानंदौ अहं विज्ञानाविज्ञाने अहं ब्रह्माब्रह्मणी द्वे ब्रह्मणी वेदितव्ये । इति चाथर्वणी श्रुतिः । अहं पञ्चभूतानि अहं पञ्च तन्मात्राणि अहमखिलं जगत् वेदोऽहमवेदोऽहम् विद्याहमविद्याहम् अजाहमनजाहम् अधश्चोर्ध्वं च तिर्यक्चाहम् अहंरुद्रेभिर्वसुभिश्चरामि अहमादित्यैरुत विश्वदेवैः अहं मित्रावरुणावुभौ बिभर्मि अहमिन्द्राग्नी अहमश्विना उभा अहं सोमं

---

१ शीर्षपदमुपनिषत्परम् । २ अत्रापि शीर्षपदमुपनिषत्परम् ।

त्वष्टारं पूषणं भगं दधामि अहं विष्णुमुरुक्रमम् ब्रह्माणमुत्प्रजापतिं दधामि अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते अहं राष्ट्रीसङ्गमनी वसूनाम् चिकितुषी प्रथमा यज्ञियानाम् अहं सुवे पितरमस्य मूर्द्धन्मम योनिरप्स्वांतः समुद्रे यएवं वेद स दैवीं सम्पदमाप्नोति ते देवा अब्रुवन् । नमो देव्यै महादेव्यै शिवायै सततं नमः । नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां देवीं शरणं प्रपद्यामहेऽसुरान्नाशयित्र्यै ते नमः । देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति : सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु ॥ कालरात्रीं ब्रह्मस्तुतां वैष्णवीं स्कन्दमातरम् । सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम् । महलक्ष्म्यै च विद्महे सर्वशक्त्यै च धीमहि । तन्नो देवी प्रचोदयात् । अदितिर्ह्यजनिष्ट दक्षया दुहिता तव । तां देवा अन्वजायन्त भद्रा अमृतबन्धवः ॥ कामे योनिः कमला वज्रपाणिर्गुहाहंसा मातलिश्वाभ्रमिन्द्रः । पुनर्गुहा सकला मायया चापृथक्क्लेशा विश्वमातादिविद्याः ॥ एषात्मशक्तिः । एषा विश्वमोहिनी पाशाङ्कुशधनुर्बाणधरा । एषा श्रीमहाविद्या । य एवं वेद स शोकं तरति । नमस्ते भगवति मातरस्मान्पाहि सर्वतः । सैषा वैष्णवा वसवः सैवैकादश रुद्राः सैषा द्वादशादित्याः सैषा विश्वे देवाः सोमपा असोमपाश्च सैषा यातुधाना असुरा रक्षांसि पिशाचयक्षसिद्धाः सैषा सत्त्वरजस्तमांसि सैषा ब्रह्मविष्णुरुद्ररूपिणी सैषा प्रजापतीन्द्रमनवः सैषा ग्रहनक्षत्रज्योतिष्कलाकाष्ठादिविश्वरूपिणी तामहं प्रणौमि नित्यम् । पापापहारिणी देवी भुक्तिमुक्तिप्रदायिनी । अनन्तां विजयां शुद्धां शरण्यां सर्वदा शिवाम् ॥ वियदाकारसंयुक्तं वीतिहोत्रसमन्वितम् । अर्द्धेन्दुलसितं देव्या बीजं सर्वार्थसाधकम् ॥ एवमेकाक्षरं मन्त्रं यतयः शुद्धचेतसः । ध्यायन्ति परमानन्दमया ज्ञानाम्बुराशयः ॥ वाङ्मया ब्रह्मभूस्तस्मात् षष्ठवक्त्रसमन्वितम् ॥ सूर्यो वामश्रोत्रविन्दुसंयुक्ताष्टतृतीयकम् ॥ नारायणेन संमिश्रो वायुश्चाधारयुक्तयः । विच्चे नवार्णकोणस्य महानानन्ददायकः ॥ हृत्पुण्डरीकमध्यस्थां प्रातःसूर्यसमप्रभाम् । पाशांकुशधरां सौम्यां वरदाभयहस्तकाम् ॥ त्रिनेत्रां रक्तवसनां भक्तकामदुहं भजे । भजामि त्वां महादेवि महाभयविनाशिनि ॥ महादारि-

---

१ सर्वदामिति पाठान्तरे तु सर्वं ददातीति तामित्यर्थः ।

घ्नशमनी महाकारुण्यरूपिणी। यस्याः स्वरूपं ब्रह्मादयो न जानन्ति ॥ तस्मादुच्यते अज्ञेया। यस्या अन्तो न लभ्यते तस्मादुच्यते अनन्ता। यस्या लक्ष्नोपलक्ष्यते तस्मादुच्यते अलक्षा। यस्या जननं नोपलक्ष्यते तस्मादुच्यते अजा। एकैव सर्वत्र वर्त्तते तस्मादुच्यते एका। एकैव विश्वरूपिणी तस्मादुच्यतेऽनेका। अत एवोच्यतेऽज्ञेयानन्तालक्षाजैकानेका। मन्त्राणां मातृका देवी शब्दानां ज्ञानरूपिणी। ज्ञानानां चिन्मयातीता शून्यानां शून्यसाक्षिणी॥ यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्त्तिता। तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीम्॥ नमामि भवभीतोऽहं संसारार्णवतारिणीम्॥ इदमथर्वशीर्षं योऽधीते। स पञ्चाथर्वशीर्षफलमाप्नोति। इदमथर्वशीर्षमज्ञात्वा योऽर्चां स्थापयति। शतलक्षं प्रजप्त्वापि नार्चाशुद्धिं च विन्दति। शतमष्टोत्तरं चास्य पुरश्चर्याविधिः स्मृतः। दशवारं पठेद्यस्तु सद्यः पापैः प्रमुच्यते। महादुर्गाणि तरति महादेव्याः प्रसादतः॥ सायमधीयानो दिवसकृतं पापं नाशयति। प्रातरधीयानो रात्रिकृतं पापं नाशयति। सायंप्रातः प्रयुञ्जानो अपापो भवति। निशीथे तुरीयसन्ध्यायां जप्त्वा वाक्सिद्धिर्भवति। नूतनायां प्रतिमायां जप्त्वा देवतासान्निध्यं भवति। भौमाश्विन्यां महादेवीसन्निधौ जप्त्वा महामृत्युं तरति स महामृत्युं तरति। य एवं वेद इत्युपनिषत्॥ इति देव्यथर्वोपनिषत्।

**अथ गायत्रीपुरश्चरणविधिः**॥ तत्र तावत्सुमुहूर्ते तीर्थादौ बिल्ववृक्षाश्रये वा गत्वा आचम्य प्राणानायम्य देशकालौ संकीर्त्य करिष्यमाणगायत्रीपुरश्चरणे अधिकारसिद्ध्यर्थं कृच्छ्रत्रयममुकप्रत्याम्नायद्वारा अहमाचरिष्ये॥ इति संकल्प्य धेनुदानहोमसुवर्णादिप्रत्याम्नायविधिना कृच्छ्राणि संपादयेत्॥ पुनर्देशकालौ संकीर्त्य मम सकलपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं चतुर्विंशतिलक्षजपात्मकं गायत्रीपुरश्चरणं स्वयं (विप्रद्वारा) करिष्ये॥ तदंगत्वेन गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदीश्राद्धाचार्यादिजपकर्तृवरणं च करिष्ये॥ इति संकल्प्य सुमुखश्चेत्यादिना गणपतिपूजनादि नान्दीश्राद्धान्तं च विधाय नान्दीश्राद्धांते सविता प्रीयताम् इति पठित्वा यदि ब्राह्मणद्वारा कारयेत्तदा देशकालौ संकीर्त्य गायत्रीपुरश्चरणे जपकर्तारं त्वामहं वृणे इति पृथक् पृथक् विप्रद्वारा जपे विप्रान्वृणुयात्॥ ततस्तान्वस्त्रासनकमंडलुमालादिभिः संपूज्य देवताः प्रार्थयेत॥

सूर्यः सोमो यमः कालः सन्ध्ये भूतान्यहः क्षपा ॥ पवमानो दिक्पतिर्भूराकाशं खेचरामराः ॥ ब्रह्मशासनमास्थाय कल्पध्वमिह सन्निधिम् ॥ इति पठेत् । ततो ब्राह्मणः कुशाद्यासनोपविष्टः पवित्रपाणिराचम्य देशकालौ स्मृत्वा अमुकगोत्रोऽमुकशर्माहममुकशर्मणो मम यजमानस्य सकलपापक्षयद्वारा श्रीरपमेश्वरप्रीत्यर्थं गायत्रीपुरश्चरणान्तर्गताऽमुकसंख्यापरिमितगायत्रीजपं करिष्ये॥ इति दैनिकजपं संकल्प्य ॥ ॐ गुरवे नमः ॥ ॐ गणपतये नमः ॥ ॐ दुर्गायै न० ॥ ॐ मातृभ्यो नमः ॥ इति नत्वा त्रिः प्राणानायम्य ॥ ॐ तत्सवितुरिति गायत्र्या विश्वामित्र ऋषिः सविता देवता गायत्री छन्दः जपे विनियोगः ॥ इति विनियोगं विधायांगन्यासं कुर्यात् यथा—ॐ **विश्वामित्राय ऋषये नमः शिरसि ॥ ॐ गायत्रीछंदसे नमो मुखे ॥ ॐ सवितृदेवतायै नमो हृदि ॥ ॐ तत्सवितुरित्यंगुष्ठाभ्यां नमः ॥ ॐ वरेण्यं तर्जनीभ्यां नमः ॥ ॐ भर्गो देवस्य मध्यमाभ्यां न० ॥ ॐ धीमह्यनामिकाभ्यां नमः ॥ ॐ धियोयोनः कानिष्ठिकाभ्यां नमः ॥ ॐ प्रचोदयात् करतलकरपृष्ठाभ्यां न० । ॐ तत्सवितुरिति हृदयाय नमः ॥ वरेण्यमिति शिरसे स्वाहा ॥ भर्गो देवस्येति शिखायै वषट् ॥ धीमहीति कवचायहुं ॥ धियो यो न इति नेत्रयोवौषट् ॥ प्रचोदयादिति अस्त्राय फट् ॥** इत्येवं शिरःप्रभृत्यङ्गन्यासान् विधाय जपं कुर्यात्॥ (तत्रादौ मालासंस्कारः) कुशोदकसहितः पंचगव्यैर्मालां प्रक्षाल्य ॐ ह्रीं अं आं इं ईं उं ऊं ऋं ॠं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं इत्येतानि पंचाशन्मातृकाक्षराणि अश्वत्थपत्रस्थापितमालायां विन्यस्य ॐ **सद्योजातेति** मंत्रेण मालां पंचगव्येन प्रोक्ष्य शीतजलेन प्रक्षाल्य ॐ **वामदेवेति** चंदनेनावघृष्याघोरेतिमालां धूपयित्वा ॐ **तत्पुरुषेति** चंदनकस्तूर्यादिना लेपयित्वाॐ **ईशान** इति मंत्रेण प्रतिमणिं शतवारं वा अभिमंत्र्य ॐ **अघोरेति** मंत्रेण मेरुं दशवारमभिमंत्रयेत् ॥ ततस्तैरेव मंत्रैर्मालां पञ्चोपचारैः संपूजयेत् ॥ ततः ॐ महामाये

१ एते सर्वेऽपि प्रतीकरूपेण दर्शिता मन्त्राः पूर्वं पठिताः ।

महामाले सर्वशक्तिस्वरूपिणि। चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥ इति प्रार्थ्य ॥ ॐ अविघ्नं कुरु माले त्वं गृह्णामि दक्षिणे करे। जपकाले च सिद्ध्यर्थं प्रसीद मम सिद्धये ॥ इति तामादाय मंत्रदेवतां सवितारं ध्यायन् हृदयसमीपे मालां धारयन् मंत्रार्थं स्मरन्मध्यंदिनावधि जपेत्। अतित्वरायां सार्द्धत्रयप्रहरावधि जप्यान्ते पुनः प्रणवमुक्त्वा। ॐ त्वं माले सर्वदेवानां प्रीतिदा शुभदा भव। शिवं कुरुष्व मे भद्रे यशो वीर्यं च सर्वदा ॥ इति मालां शिरसि निधाय त्रिः प्राणानायम्य पूर्वोक्तं न्यासत्रयं कृत्वा जपमीश्वरार्पितं कुर्यात् ॥ प्रत्यहं समानसंख्य एव जपो विधेयः। न तु न्यूनाधिकः ॥ एवं पुरश्चरणजपसमाप्तौ होमः ॥ पुरश्चरणसांगतासिद्ध्यर्थं होमविधिं करिष्ये ॥ इति संकल्प्य अग्निं प्रतिष्ठाप्य पीठे सूर्यादिनवग्रहपूजनादि कलशस्थापनान्तं कर्म कृत्वा कुशकण्डिकां कुर्यात्। ततः आज्यभागांते इदं हवनीयद्रव्यमन्वाधानोक्तदेवताभ्योऽस्तु न ममेति यजमानद्वारा त्यागं कृत्वा ॥ अर्कादिसमिच्चर्वाज्याहुतिभिर्ग्रहहोमं संपाद्य प्रधानदेवतां सवितारं चतुर्विंशतिसहस्रतिलाहुतिभिस्त्रिसहस्रसंख्याकाभिः पायसाहुतिभिर्घृतमिश्रतिलाहुतिभिर्दूर्वाहुतिभिः क्षीरद्रुमसमिधाहुतिभिश्च तर्पयित्वा शेषेण स्विष्टकृद्धोमं कुर्यात्।होमे सप्रणवव्याहृतिरहिता स्वाहांता गायत्री दूर्वात्रयस्यैकाहुतिः ॥ दूर्वासमिधो दधिमध्वाज्याक्ताः। ततो होमांते बलिदानं कृत्वा यजमानस्याभिषेकः कार्यः। ततः प्रतिलक्षं सुवर्णनिष्कत्रयं तदर्धं वा शक्त्या वा दक्षिणा। होमांते जले देवं सवितारं संपूज्य होमसंख्यादशांशेन २४००० गायत्र्यंते सवितारं तर्पयामि इत्युक्त्वा तर्पणं कार्यम् ॥ तर्पणदशांशेन २४० गायत्र्यन्ते आत्मानमभिषिंचामि नम इति यजमानमूर्ध्न्यभिषेकः। होमतर्पणाभिषेकाणां मध्ये यदेव न संभवति तत्स्थाने तत्तद्द्विगुणो जपः कार्यः ॥ अभिषेकसंख्यादशांशेन विप्रभोजनम् ॥ पुरश्चरणं संपूर्णमस्त्विति विप्रान् वाचयित्वा ईश्वरार्पणं कार्यम्। प्रत्यहं यज्जाग्रत इति शिवसंकल्पमंत्रस्य त्रिः पाठः। कर्त्ता ब्राह्मणैः सह हविष्याशी सत्यवाक् अधःशायी ब्रह्मचारी भवेत्। विष्णुशयनमासेषु पुरश्चरणं न कार्यम्। तीर्थादौ शीघ्रं सिद्धिः। बिल्ववृक्षाश्रयेण जपे एकाहात्सिद्धिः ॥

भूर्भुवःस्वः अरुंधतीसहितकश्यपादिऋषिभ्यो नमः ध्यानं समर्पये ॥ ॐ पुरुषऽएवेदꣳसर्वंयद्भूतँयच्चभाव्यम् ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ सुवर्णघटितं दिव्यं नानारत्नसमन्वितम् । आसनं मनसा दत्तं गृह्यताम्भो मुनीश्वराः। ॐ भूर्भुवः स्वः अरुंध० नमः आसनं समर्पयामि। ॐ एतावानस्यमहिमातोज्यायाँश्चपूरुषः ॥ पादोऽस्यविश्वाभूतानित्रिपादस्यामृतन्दिवि ॥ गङ्गादितीर्थसम्पन्नं गन्धद्रव्येण सौरभम्। पाद्यं ददामि मनसा प्रसीदन्तु मुनीश्वराः॥ ॐ भूर्भुवः स्वः अरुंधतीस० नमः पाद्यं समर्पयामि ॥ ॐ त्रिपादूर्ध्वऽउदैत्पुरुषःपादोऽस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ सुवर्णामत्र आनीतं गन्धपुष्पाक्षतान्वितम् । कश्यपाद्या महाभागा गृह्णन्त्वर्घ्यंमयाऽर्पितम् ॥ ॐ भूर्भुवः स्वः अरुंध० नमः अर्घ्यं ॥ ॐ ततो विराडजायत विराजोऽअधिपूरुषः॥ सजातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ कर्पूरसहितं हेमभाजने निर्मले स्थितम् ॥ आचमनीयमिदं तोयं भवद्भिर्मुनिभिर्मुदा ॥ ॐ भूर्भुवः स्वः अरुंध० न० आचमनीयं० ॥ ॐ तस्माद्यज्ञात्सर्वहुतः सम्भृतम्पृषदाज्यम् । पशूँस्ताँश्चक्रेवायव्यानारण्याग्राम्याश्चये ॥ सुरभिद्रव्यसम्पूर्णं पवित्रं मङ्गलं परम्। स्नानार्थं वः समानीतं मनसा भो समर्पये॥ ॐ भूर्भुवः स्वः अरुंध० न० स्नानं०॥ॐ पञ्चनद्यःसरस्वतीमपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासोदेशेभवत्सरित् ॥ पयो दधि घृतं चैव शर्करा मधु चेत्यदः । पञ्चामृतं हृदा दत्तं स्नानार्थं प्रतिगृह्यताम् ॥ ॐ भूर्भुवः स्वः अरुंधती० पंचामृतस्नानं० ॥ ॐ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ नानासुरभितद्रव्यसम्भृतं पावनं जलम् । गृह्णन्तु कृपया तुष्टाः प्रसादं मयि धीयताम् । ॐ भूर्भुवः स्वः अरुंध० नमः गंधोदकस्नानं० ॥ ततः पुरुषसूक्तेनाभिषेकं कुर्यात् ॥ॐ तस्माद्यज्ञात्सर्वहुतऽऋचःसामानियज्ञिरे ॥ छंदांꣳसियज्ञिरे तस्माद्यजुस्तस्मादजायत ॥

ॐ सूक्ष्माण्यतीव शुभ्राणि वस्त्राणि विविधानि च । कृपया प्रतिगृह्णन्तु प्रसीदन्तु मुनीश्वराः ॥ ॐ भूर्भुवः स्वः अरुंध० नमः वस्त्रं समर्पयामि ॥ ॐ तस्मादश्वाऽअजायन्तयेकेचोभयादतः ॥ गावोहयाज्ञिरे तस्मात्तस्माज्जाताऽअजावयः ॥ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजंपुरस्तात् । आयुष्यमग्र्यं प्रति मुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ नानामन्त्रैः समुद्भूतं त्रिवृतं ब्रह्मसूत्रकम् । प्रत्येकं दीयतं स्वच्छं गृह्णन्तु मुनिपुङ्गवाः ॥ ॐ भूर्भुवः स्वः अरुंध० नमः यज्ञोपवीतं स० ॥ ॐ तँ यज्ञम्बर्हिषि प्रौक्षन्पुरुषञ्जातमग्रतः ॥ तेन देवाऽअयजन्तसाध्याऽऋषयश्चये ॥ आत्मसंतापनिर्णाशि सुगन्धद्रव्यसम्भवम् । चन्दनं सम्प्रयच्छामि स्वीकुर्वन्तु मुनीश्वराः ॥ ॐ भूर्भुवः स्वः अरुंध० नमः गंधं समर्पयामि ॥ ॐ अक्षन्नमीमदन्तह्यव प्रियाऽअधूषत ॥ अस्तोषतस्वभानवोविप्रानविष्ठयामती। योजान्विन्द्रतेहरी ॥ शुभतण्डुलजान्शुक्लाञ्शङ्खशुभ्रान्मनोहरान् । अक्षतान् सम्प्रयच्छामि गृह्णन्तु मुनिपुङ्गवाः ॥ ॐ भूर्भुवः स्वः अरुंध० अक्षतान् सम० ॥ १२ ॥ ॐ अहिरिवभोगैःपर्य्येतिबाहुं ज्ज्यायाहेतिम्परिबाधमानः ॥ हस्तघ्नोविश्वावयुनानिविद्वान्पुमान्पुमांसं परिपातुविश्वतः ॥ अबीरं च गुलालं च शोभनं द्रव्यमुत्तमम् । गृह्णन्तु कृपया तुष्टा भवन्तु मयि सर्वदा ॥ ॐ भूर्भुवः स्वः अरुंध० नमः हरिद्राकुंकुमादिद्रव्याणि समर्पयामि ॥ ॐ यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखंकिमस्यासीत्किम्बाहूकिमूरूपादाऽउच्यते ॥ कमलादीनि हृद्यानि सुरभीणि समन्ततः । मयाऽर्पितानि पुष्पाणि गृह्णन्तु मुनिपुङ्गवाः ॥ ॐ भूर्भुवः स्वः अरुंध० नमः पुष्पाणि० ॥ ॐ ब्राह्मणो स्यमुखमासीद्बाहूराजन्यः कृतः ॥ ऊरूतदस्ययद्वैश्यः पद्भ्याᳫंशूद्रोऽअजायत ॥ कृष्णागुरुसमुद्भूतो धूप एष दशाङ्गकः। सुगन्धिततरो दत्तो गृह्यतां मुनिपुंगवैः ॥ ॐ भूर्भुवः स्वः अरुंध० नमः धूपं सम० ॥ ॐ चन्द्रमामनसोजातश्चक्षोःसूर्य्योऽअजायत । श्रोत्राद्वायुश्चप्राणश्चमु-

खाद्ग्निरंजायत ॥ पञ्चवर्त्तिसमायुक्तः सर्वमङ्गलशोभनः । हृदा निवेदितो भक्त्या दीपोऽयं मुनिपुङ्गवाः॥ ॐभूर्भुवः स्वः अरुंध० नमः दीपं सम० ॥ ॐ नाब्भ्याऽआसीदुन्तरिक्षठंशीर्ष्णोद्यौः समवर्त्तत ॥ पुद्भ्याम्भूमिर्दिशः श्रोत्रात्तथालोकाँ२ ऽ अकल्पयन् ॥ फलमूलसमायुक्तं नानाशाकसमन्वितम् । शर्कराघृतसंयुक्तं नैवेद्यं प्रतिगृह्यताम् ॥ ॐ भूर्भुवः स्वः अरुंध० नमः नैवेद्यं स० ॥ नैवेद्यमध्ये पानीयं समर्पये, उत्तरापोशनं, हस्तप्रक्षालनं, मुखप्रक्षालनं, करोद्वर्त्तनाथ चन्दनं च समर्पये।ॐ याः फलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः । बृहस्पतिप्प्रसूतास्तानोमुञ्चन्त्वठंहसः ॥इदंफलं मया ह्यं मनसाऽद्य समर्पितम् । गृह्णन्तु कृपया पूर्णाः प्रसीदन्तु मुनीश्वराः ॥ ॐ भूर्भुवः स्वः अरुंध० नमः फलानि सम० ॥ ॐ यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ वसन्तोऽस्यासीदाज्यङ्ग्रीष्मऽइध्मः शरद्धविः॥ पूगीफलं सकर्पूरं नागवल्लीसमन्वितम् । एलालवङ्गरुचितं ताम्बूलं प्रतिगृह्यताम्। ॐ भूर्भुवः स्वः अरुंधती० नमः तांबूलं ॥ ॐ हिरण्यगर्भः समवर्त्तताग्ग्रेभूतस्यजातः पतिरेकऽआसीत् । सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥ हिरण्यगर्भगर्भस्थं हेमवीजं विभावसोः । अनन्तपुण्यफलदं स्वीकुर्वन्तु मुनीश्वराः ॥ ॐ भूर्भुवः स्वः अरुंधती० नमः दक्षिणां सम० ॥ ॐ इदठंहविः प्प्रजननम्मेऽअस्तुदशवीरठंसर्वगणठंस्वस्तये ॥ आत्मसनिप्रजासनिपशुसानिलोकसन्यभयसानिः अग्निः प्रजाम्बहुलाम्मेकरोत्वन्नम्पयोरेतोऽअस्मासुधत्त ॥ ब्रह्मिष्ठा ब्रह्मरूपाश्च कश्यपाद्या मुनीश्वराः । ब्रह्मज्ञानप्रदा नित्यं नीराजयामि भक्तितः । ॐ भूर्भुवः स्वः अरुन्धतीस० नमः कर्पूरार्त्तिक्यं समर्पये ॥ ॐ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः ॥ देवा यद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥यानि कानि च पापानि जन्मान्तरकृतानि च ।तानि तानि विनश्यन्ति प्रदक्षिणे पदेपदे॥ॐ भूर्भुवः स्वः अरुंधती० नमः प्रदक्षिणां सम० ॥ ॐ यज्ञेनयज्ञमयजन्तदेवास्ता-

नि॒धर्मा॑णिप्रथ॒मान्या॑सन् ॥ तेहु॒नाक॑म्ममहि॒मान॑÷सचन्त॒यत्र पूर्वे॑सा॒ध्याः॑सन्ति॑दे॒वाः ॥ शरणागतदीनार्त्तपरित्राणपरायणाः । रक्षन्तु मुनयः सर्वे प्रणमामि पुनः पुनः ॥ ॥ भूर्भुवः स्वः अरुंध० मंत्रपुष्पांजलिं समर्पये । प्रार्थना ॐ मंत्रहीनं क्रियाहीनं भक्तिहीनं मुनीश्वराः ॥ यत्पूजितं मया पूर्वं परिपूर्णं तदस्तु मे ॥ ॐ भूर्भुवः स्वः अरुन्ध० नमः नमस्कारं समर्पये ॥ अनेन मया वेदोत्सर्जनांगत्वेन कृतेन ध्यानावाहनादिषोडशोपचारैः पूजनेन अरुन्धतीसहिताःकश्यपादयः सप्तर्षयः प्रीयन्तां न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति ऋषिपूजनं कृत्वा स्वपितृभ्यो यज्ञोपवीतं दद्यात् , तत्रादौ प्राचीनावीती दक्षिणामुखः स्वपुरतो यज्ञोपवितानि निधाय कुशोदकं गृहीत्वा ॐ अमुकगोत्रेभ्यः अस्मत्पितृपितामहप्रपितामहेभ्यः स्वधा सम्पद्यन्ताम् । एवमेव—ॐ अमुकगोत्रेभ्यः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहेभ्यः स्वधा सम्पद्यन्ताम् । एवमेव पुनः—ॐ कव्यवाडनलादिदिव्यपितृभ्यः इमानि यज्ञोपवीतानि स्वधा संपद्यंताम् । इति समर्पयेत् । जीवत्पितृकोऽपि पितामहादिभ्यो मातामहादिभ्यश्च यज्ञोपवीतानि दद्यात् । एतानि सर्वाणि ऋष्युपर्येव समर्प्यन्ते । ततः पुनः सव्यं कृत्वा सर्वान् ब्राह्मणान् गंधादिना संपूज्य तेभ्यो यज्ञोपवीतानि दत्त्वा सर्वैः सह स्वयमपि धारयेत् ।

**यज्ञोपवीतधारणप्रयोगः** ॥ आचम्य प्राणानायम्य देशकालौ संकीर्त्य मम श्रौतस्मार्तकर्मानुष्ठानसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नूतनयज्ञोपवीतधारणमहं करिष्ये तदंगत्वेन यज्ञोपवीताभिमन्त्रणं करिष्ये इति संकल्प्य । ॐ इ॒दंवि॒ष्णु॒र्विच॑क्रमे॒ त्रे॒धानिद॑धेप॒दम् ॥ सम॑ूढमस्यपा॒ᳪं सु॒रे स्वाहा॑ ॥ ॐ आपो॒हिष्ठा॑मयो॒भुव॑इत्यादिमन्त्रैरुपवीतानि प्रक्षाल्य अनंतरं दशवारं गायत्रीमंत्रैरभिमंत्र्य पुष्पाण्यादाय तंतुषु देवतानामावाहनं कुर्यात् । तद्यथा—प्रथमतंतौ ॐ ॐकारमावाहयामि । द्वितीयतंतौ ॐ अग्निमावाहयामि । तृतीयतंतौ ॐ सर्पानावा० । चतुर्थतंतौ ॐ सोममावाह० । पञ्चमतंतौ ॐ पितॄनावाहयामि । षष्ठतंतौ ॐ प्रजापति० । सप्तमतन्तौ ॐ अनिल० । अष्टमतन्तौ ॐ सूर्यमावाह० । नवमतन्तौ ॐ विश्वान्देवानावाहयामि ॥ ग्रंथिदेवता-

नामावाहनम् ग्रंथिमध्ये ॐ ब्रह्मणे नमः ब्रह्माणमावाहयामि । ॐ विष्णवे नमः विष्णुमावाह० । ॐ रुद्राय नमः रुद्रमावाहयामि । ततः ॐ प्रणवाद्यावाहितदेवताभ्यो नमः यथास्थानमहं न्यसामि इत्यावाह्य गंधादिभिः पूजयेत् ॥ ततो ध्यानम् । ॐ प्रजापतेर्यत्सहजं पवित्रं कार्पाससूत्रोद्भवब्रह्मसूत्रम् । ब्रह्मत्वसिद्धयै च यशःप्रकाशं जपस्य सिद्धिं कुरु ब्रह्मसूत्रम् ॥ यज्ञोपवीतमिति मंत्रस्य परमेष्ठी ऋषिः लिङ्गोक्ता देवता त्रिष्टुप्छन्दः यज्ञोपवीतधारणे विनियोगः । ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ॥ अनेन मंत्रेण यज्ञोपवीतानां पृथक् पृथक् धारणं कुर्यात् । तत आचमनं कृत्वा । ॐ एतावद्दिनपर्यंतं ब्रह्मत्वं धारितं मया । जीर्णत्वात्त्वत्परित्यागो गच्छ सूत्र यथासुखम् ॥ इति मंत्रेण जीर्णयज्ञोपवीतं शिरोमार्गेण निःसार्य भूमौ त्यजेत् पश्चाद्यथाशक्ति गायत्रीजपं कुर्यात् ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियाऽऽदिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ इति यज्ञोपवीतधारणप्रयोगः ॥

अथोत्सर्गाङ्गऋषितर्पणम् ॥ आचम्य प्राणानायम्य देशकालौ संकीर्त्य छन्दसां कचिदनध्यायादिकाले पठनादनधिकारिभिः श्रावणाच्च प्राप्तमालिन्यस्य निरासार्थमुत्सर्गाङ्गतर्पणमहं करिष्ये इति संकल्प्य दक्षिणं जान्वाच्य ईशानाभिमुखः सव्येन प्रागग्रैर्दर्भैर्देवतीर्थेन देवतर्पणं कुर्यात् ॥ ॐ विश्वे देवासऽआगतशृणुताम॑ऽइमꣳहवम् ॥ एदम्बर्हिर्निषीदत ॥ विश्वेदेवाःशृणुतेमꣳहवम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठ ॥ येऽअग्निजिह्वाऽउतवायजत्राऽआसद्यास्मिन्बर्हिषिमादयध्वम् ॥ इति देवानावाह्य ॥ ॐ देवास्तृप्यन्ताम् ॥ ॐ छन्दांसि तृप्यंताम् ॥ ॐ वेदास्तृप्यंताम् ॥ ॐ ऋषयस्तृप्यंताम् ॥ ॐ पुराणाचार्यास्तृप्यंताम् ॥ ॐ गन्धर्वास्तृप्यंताम् ॥ ॐ इतराचार्यास्तृप्यन्ताम् ॥ ॐ संवत्सरास्तृप्यन्ताम् ॥

ततो वामं जान्वाच्य, दक्षिणामुखोऽपसव्येन तिलमिश्रितं जलमंजलौ गृहीत्वा ॐ अमुकगोत्राः अस्मत्पितरः अमुकशर्माणो वसुरूपास्तृप्यध्वं स्वधा नमः ॥ ॐ अमुकगोत्राः अस्मत्पितामहाः अमुकशर्माणो रुद्ररूपास्तृप्यध्वं स्वधा नमः ॥ ॐ अमुकगोत्राः अस्मत्प्रपितामहाः अमुकशर्माण आदित्यरूपास्तृप्यध्वं स्वधा नमः इति स्वापितॄँस्तर्पयेत् ॥ एवं मातृमातामहादींश्च तर्पयेत् । जीवत्पितृकाः पुत्राः शिष्याश्चाचार्यस्य पितृतर्पणं कुर्युः, तद्यथा ॐ अमुकगोत्राः अस्मदाचार्यपितरस्तृप्यध्वं स्वधा नमः इति॥ततः सव्यम् आचमनम् ॥ अथ वंशानां वाचनम् ॥ ॐ अयं पुर इत्यादिपंचानां साध्या ऋषयो यजूंषि प्राणभृतो देवताः ॥ मूर्द्धेत्यादिद्वयोर्देवा ऋषयो यजूंषि लिंगोक्ता देवताः । माछन्दइत्यादिषोडशानां परमेष्ठी ऋषिर्यजूंषि लिङ्गोक्ता देवताः ऋषितर्पणे विनियोगः ॥ सप्तऽऋषय इत्यस्य याज्ञवल्क्य ऋषिः ॥ सप्तर्षयो देवताः जगती छन्दः ऋषितर्पणे विनियोगः ॥ ॐ अयं पुरोभुवस्तस्यप्राणोभौवायुनो वसन्तः प्राणायनो गायत्री वासन्ती ॥ गायत्र्यै गायत्रङ्गायत्रादुपांशुरुपांशोस्त्रिवृत्त्रिवृतोरथन्तरंवासिष्ठऽऋषिं÷ प्रजापतिगृहीतयात्वयाप्राणङ्गृह्णामिप्रजाभ्यं÷ ॥ अयन्दक्षिणाद्विश्वकर्म्मातस्यमनो वैश्वकर्मणङ्ग्रीष्मोमानसास्त्रिष्टुब्ग्रैष्मीत्रिष्टुभं÷ स्वारंस्वारादन्तर्यामोन्तर्यामात्पञ्चदशःपञ्चदशाद्बृहद्भरद्वाजऽऋषिं÷प्रजापतिगृहीतयात्वयामनोगृह्णामि प्रजाभ्यः÷ ॥ अयंपश्चात ॥ अयंपश्चाद्विश्वव्यचास्तस्यचक्षुर्वैश्वव्यचसंवर्षाश्चाक्षुष्याजगती वर्षीजगत्याऽऋक्सामृक्समाच्छुक्रः शुक्रात्सप्तदशःसप्तदशाद्वैरूपंजमदग्निर्ऋषिं÷ प्रजापतिगृहीतयात्वयाचक्षुर्गृह्णामिप्रजाभ्यं÷ ॥ इदमुत्तरात्स्वस्तस्यश्रोत्रंसौवंशरच्छ्रौत्र्यनुष्टुप्शारद्यनुष्टुभंऽऐडमैडान्मन्थी मन्थिनऽएकाविं-

शर्यकाविुँ शाद्वैराजंविश्वामित्रऋषिं ÷ प्रजापतिगृहीतयात्वं-
याश्रोत्रंगृह्णामिप्रजाभ्यं ÷ ॥ इयमुपरिमतिस्तस्यै वाङ्मा-
त्याहेमन्तोवाच्यःपुंक्तिहैमन्तीपङ्क्त्यै निधनवन्निधनंवत-
आग्रयणऽआग्रयणात्रिणवत्रयस्त्रिंशौत्रिणवत्रयस्त्रिंशाभ्यां-
ᳬशाकररैवतेविश्वकर्मऋषिं ÷ प्रजापतिगृहीतया त्वयाव्वाचं
गृह्णामि प्रजाभ्यो लोकन्ताऽइन्द्रम् ॥ लोकम्पृणच्छिद्रम्प
णाथोसदिध्रुवात्वम् ॥ इन्द्राग्नीत्वाबृहस्पतिरस्मिन्योन्यो-
नावसीषदन् ॥ ताऽअस्यसूददोहसःऽसोमᳬश्रीणन्तिपृ-
श्नयः ॥ जन्मन्देवानाँविशस्त्रिष्वारोचनोदिवः ॥ इन्द्रँवि-
श्वाऽअवीवृधन्त्समुद्रव्यचसङ्गिरं ÷ । रथीतमᳬरथीनाँ
वाजानाᳬसत्पतिम्पतिम् ॥ मूर्द्धावयं ÷ प्रजापतिश्छन्दः
क्षत्रँवयोमयन्दछन्दो विष्टम्भोवयोधिपतिश्छन्दोविश्व-
कर्म्मावयं ÷ परमेष्ठीछन्दोवस्तोवयोविवलञ्छन्दो वृष्णिर्व
योविशालञ्छन्दःपुरुषोवयस्तन्द्रञ्छन्दोव्याघ्रो वयोनाधृष्टं
ञ्छन्द ÷ सिँहोवयश्छादिश्छन्द ÷ पष्ठवाड्वयो बृहतीछ-
न्दऽउक्षावयं ÷ ककुप्छन्दऽऋषभोवयं ÷ सतोबृहतीछन्दोनड्-
वान्वयं ÷ अनड्वान्वयं ÷ पुंक्तिश्छन्दोधेनुर्वयो जगतीच्छ-
न्दस्त्र्यविर्वयस्त्रिष्टुप् छन्दोदित्यवाड्वयोविराट्छन्दःपञ्चा
विर्वयो-गायत्रीच्छन्दस्त्रिवत्सोवयऽउष्णिक्छन्दस्तुर्य्यवाड्व-
योनुष्टुप्छन्दोलोकन्ताऽइन्द्रम् ॥ माच्छन्द ÷ प्रमाच्छन्द ÷
प्रतिमाच्छन्दोऽ अस्रीवयश्छन्द ÷ पङ्क्तिश्छन्दऽउष्णि-
क्छन्दोबृहतीछंदोनुष्टुप्छंदोव्विराट्छंदो गायत्रीच्छन्दस्त्रि-
ष्टुपछन्दो जगतीच्छदः पृथिवीच्छंदः ॥ पृथिवी-
च्छन्दोन्तरिक्षञ्छन्दोद्यौश्छन्दःसमाश्छन्दोनक्षत्राणिच्छन्दो-
व्वाक्छन्दोमनश्छंदःकृषिश्छन्दोहिरण्यञ्छन्दोगौश्छंदोजा-
च्छंदोश्वश्छन्दः । अग्निर्देवताव्वातादेवतासूर्योदेवताचन्द्र-
मादेवताव्वसवोदेवतारुद्रादेवतादित्यादेवतामरुतोदेवता-

ऽविश्वेदेवादेवताबृहस्पतिर्देवतेन्द्रोदेवतावरुणोदेवता ॥ एवश्छन्दो वरिवश्छन्दः शम्भूश्छन्दः परिभूश्छन्दऽआच्छच्छन्दो मनश्छन्दो व्यचश्छन्दः सिन्धुश्छन्दः समुद्रश्छन्दः सरिरञ्छन्दः ककुप्छन्दस्त्रिककुप्छन्दः काव्यञ्छन्दोऽअंकुपञ्छन्दोऽक्षरपंक्तिश्छन्दः पदपङ्क्तिश्छन्दो विष्टारपङ्क्तिश्छन्दः क्षुरोभ्रजश्छन्दऽआच्छच्छन्दः प्रच्छच्छन्दः ॥ आच्छच्छन्दः प्रच्छच्छन्दः संयच्छन्दो वियच्छन्दो बृहच्छन्दो रथन्तरञ्छन्दो निकायश्छन्दो विवधश्छन्दो गिरश्छन्दो भ्राजश्छन्दः संस्तुप्छन्दोऽनुष्टुप्छन्दऽएवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विष्पर्द्धाश्छन्दो विशालञ्छन्दश्छदिश्छन्दो दूरोहणञ्छन्दस्तन्द्रञ्छन्दोऽअङ्काङ्कञ्छन्दः ॥ रश्मिना सत्याय सत्यञ्जिन्व प्रेतिना धर्मणा धर्मञ्जिन्वान्वित्या दिवा दिवञ्जिन्व सन्धिनान्तरिक्षेणान्तरिक्षञ्जिन्व प्रतिधिना पृथिव्या पृथिवीञ्जिन्व विष्टम्भेन वृष्ट्या वृष्टिञ्जिन्व प्रवयाह्नाहर्जिन्वानुया रात्र्या रात्रीञ्जिन्वोशिजा वसुभ्यो वसूञ्जिन्व प्रकेतेनादित्येभ्यऽआदित्याञ्जिन्व तन्तुना रायः ॥ तन्तुना रायस्पोषेण रायस्पोषञ्जिन्व संसर्पेण श्रुताय श्रुतञ्जिन्वैडेनौषधीभिरोषधीर्जिन्वोत्तमेन तनूभिस्तनूर्जिन्व वयोधसाधीतेनाधीतञ्जिन्वाभिजिता तेजसा तेजो जिन्व ॥ प्रतिपदसि प्रतिपदे त्वानुपदस्यनुपदे त्वा सम्पदसि सम्पदे त्वा तेजोऽसि तेजसे त्वा त्रिवृदसि ॥ त्रिवृदसि त्रिवृते त्वा प्रवृदसि प्रवृते त्वा विवृदसि विवृते त्वा सवृदसि सवृते त्वाक्रमोऽस्याक्रमाय त्वा सङ्क्रमोऽसि सङ्क्रमाय त्वोत्क्रमोऽस्युत्क्रमाय त्वोत्क्रान्तिरस्युत्क्रान्त्यै त्वाधिपतिनोर्जोर्जञ्जिन्व ॥ राज्ञ्यसि प्राची दिग्वसवस्ते देवाऽअधिपतयोऽग्निर्हेतीनाम्प्रतिधर्त्ता त्रिवृत्त्वा स्तोमः पृथिव्याꣳश्रयत्वाज्यमुक्थमव्यथायै स्तभ्ना-

तुरथन्तरꣳ सामुप्प्रतिष्ठित्याऽअन्तरिक्षुऽऋषयस्त्वाप्प्रथम्जादेवेषु दिवोमात्रयावरिम्णाप्प्रथन्तुविधर्ताचायमधिपतिश्चतेत्वासर्वेसꣳविदानानाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु॥विराडसिदक्षिणादिग्रुद्रास्तेदेवाऽअधिपतयऽइन्द्रोहेतीनांप्रतिधर्त्तापञ्चदशस्त्वास्तोमः पृथिव्याꣳश्रयतुप्रउगमुक्थमव्यथायैस्तभ्नातुबृहत्सामप्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वाप्प्रथम्जादेवेषु दिवोमात्रयावरिम्णाप्प्रथस्तुविधर्ताचायमधिपतिश्चतेत्वासर्वेसꣳविदानानाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु॥सम्म्राडसिप्प्रतीचीदिगादित्यास्तेदेवाऽअधिपतयोवरुणोहेतीनाम्प्रतिधर्त्तासप्तदश स्त्वास्तोमः पृथिव्याꣳश्रयतु मरुत्वतीयमुक्थमव्यथायैस्तभ्नातुवैरूपꣳसामप्प्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वा प्रथम्जादेवेषुदिवोमात्रयावरिम्णाप्प्रथन्तु विधर्ताचायमधिपतिश्चतेत्वासर्वेसंविदानानाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु ॥ स्वराडस्युदीचीदिङ् मरुतस्तेदेवाऽअधिपतयः सोमोहेतीनाम्प्रतिधर्त्तैकविꣳशस्त्वास्तोमः पृथिव्याꣳश्रयतुनिष्केवल्यमुक्थमव्यथायै स्तभ्नातु वैराजꣳसामप्प्रतिष्ठित्याऽअन्तरिक्षऽ ऋषयस्त्वाप्प्रथम्जादेवेषुदिवोमात्रयावरिम्णाप्प्रथन्तुविधर्ता चायमधिपतिश्चतेत्वासर्वेसꣳविदानानाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु ॥ अधिपत्न्यसिबृहतीदिग्विश्वेतेदेवाऽअधिपतयो बृहस्पतिर्हेतीनाम्प्रतिधर्त्तात्रिणवत्रयस्त्रिꣳशौत्वास्तोमौपृथिव्याꣳश्रयतांवैश्वदेवाग्निमारुतेऽउक्थेऽअव्यथायैस्तभ्नीताꣳशाक्वररैवतेसामनीप्प्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वाप्प्रथम्जादेवेषुदिवोमात्रया वरिम्णाप्रथन्तुविधर्ताचायमधिपतिश्चतेत्वासर्वेसꣳविदानानाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु ॥ अयम्पुरोहरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रा-

मण्यौ पुञ्जिकस्थलाचक्रतुस्थलाचाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिस्तेभ्यो नमोऽस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ अयन्दक्षिणा विश्वकर्म्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानीग्रामण्यौ मेनका च सहजन्या चाप्सरसौ यातुधाना हेती रक्षांसि प्रहेतिस्तेभ्यो नमोऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ अयम्पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्यौ प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ व्याघ्रा हेतिः सर्पाः प्रहेतिस्तेभ्यो नमोऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ अयमुत्तरात्संयद्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्यौ विश्वाची च घृताची चाप्सरसावापो हेतिर्वातः प्रहेतिस्तेभ्यो नमोऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ अयमुपर्य्यर्वाग्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानीग्रामण्यावुर्वशी च पूर्वचित्तिश्चाप्सरसाववस्फूर्जन् हेतिर्विद्युत्प्रहेतिस्तेभ्यो नमोऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥

ॐ सप्तऽऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जागृतोऽअस्वप्नजौ सत्रसदौ च देवौ ॥ मन्त्रोक्ता ऋषयस्तृप्यन्ताम् ॥ वंशानां वाचनम् । अथ वंशः समानमासांजीवीपुत्रात्सांजीवीपुत्रो मांडूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणो वात्स्याद्वात्स्यः शांडिल्याच्छांडिल्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तंबायनाद्यज्ञवचा राजस्तंबायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्मा स्वयंभु ब्रह्मणे नमः ॥ वंशोक्ता ऋषयस्तृप्यन्ताम् ॥ अथ वंशस्तदिदं वयं शौपर्णाय्याच्छौपर्णा-

च्यागौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्य्याच्च-
पराशर्य्यऽसांकृत्याच्चभारद्वाजाच्चभारद्वाजऔदवाहेश्चशा
ण्डिल्याच्चशाण्डिल्योवैजवापाच्चगौतमाच्चगौतमोवैजपायना
च्चवैष्टपुरेयाच्चवैष्टपुरेयःशाण्डिल्याच्चरौहिणायनाच्चः रौ-
हिणायन शौनकाच्चात्रेयाच्चरैभ्याच्च रैभ्यः पौतिमाष्याय-
णाच्च कौण्डिन्यायनाच्च कौण्डिन्यायनः कौण्डिन्यात्कौण्डि-
न्यःकौण्डिन्यात्कौण्डिन्यः कौण्डिन्याच्चाग्निवेश्याच्च॥ आग्नि-
वेश्यःसैतवात्सैतवःपाराशर्य्यात्पाराशर्योजातूकर्ण्याज्जातू-
कर्ण्यो भारद्वाजाद्भारद्वाजोभारद्वाजाच्चासुरायणाच्चगौतमा-
च्चगौतमोभारद्वाजाद्भारद्वाजोवैजवापायनाद्वैजवापायनः कौ
शिकायनेःकौशिकायनिर्घृतकौशिकाद्घृतकौशिकःपाराश-
र्य्यायणात्पाराशर्य्यायणऽपाराशर्य्यात्पाराशर्योजातूकर्ण्या-
ज्जातूकर्ण्योभारद्वाजाद्भारद्वाजोभारद्वाजाच्चासुरायणाच्चया-
स्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्घनेरौपजन्घानिरासुरे-
रासुरिर्भारद्वाजाद्भारद्वाजऽआत्रेयात् ॥ आत्रेयादात्रेयोमा-ण्टे-
र्माण्टिर्गौतमाद्गौतमोगौतमाद्गौतमो वात्स्याद्वात्स्यःशाण्डि
ल्याच्छांडिल्यःकैशोर्यात्काप्यात्कैशोर्यःकाप्यःकुमारहारि-
तात्कुमारहारितो गालवाद्गालवोविदर्भीकौण्डिन्याद्विदर्भी-
कौण्डिन्यो वत्सनपातोबाभ्रवाद्वत्सनपाद्बाभ्रवःपथःसौभरा-
त्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्यआङ्गिरसऽआभू-
तेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रोविश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽ
श्विभ्यामश्विनौ दधीचऽआथर्वणाद्दध्यङ्ङाथर्वणो दैवाद-
थर्वादैवो मृत्योःप्राध्वꣳसनान्मृत्युः प्राध्वꣳसनः प्रध्वꣳ
सनात्प्रध्वꣳसनऽएकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः
सनारोःसनारुःसनातनात्सनातनःसनगात्सनगः परमेष्ठि-
नःपरमेष्ठीब्रह्मणोब्रह्मस्वयम्भुब्रह्मणे नमः॥वंशोक्ता ऋषयस्तृ-
प्यंताम् ॥ अथवꣳशस्तादिदं वयꣳशौपर्णाय्याच्छौपर्णा-

र्य्याद्गौतमाद्गौतमो वात्स्याद् वात्स्यो वात्स्याच्चपाराश-र्य्याच्चपाराशर्य्यः साङ्कृत्याच्चभारद्वाजाच्चभारद्वाज औदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो वैजवापाच्च गौतमा-च्चगौतमोवैजवापायनाच्चवैष्टपुरेयाच्चवैष्टपुरेयःशाण्डिल्या च्चरौहिणायनाच्चरौहिणायनऽ शौनकायनाच्चजैवन्ता-यनाच्चरैभ्याच्चरैभ्यऽ पौतिमाष्यायणाच्चकौण्डिन्यायना-च्चकौण्डिन्यायनःकौण्डिन्याभ्यां कौण्डिन्यऽऔर्णवाभेभ्यऽऔ-र्णवाभाः कौण्डिन्यात्कौण्डिन्यःकौण्डिन्यात्कौण्डिन्यःकौण्डि-न्याच्चाग्निवेश्याच्च आग्निवेश्यःसैतवात्सैतवःपाराशर्य्या-त्पाराशर्य्योजातूकर्ण्याज्जातूकर्ण्योभारद्वाजाद्भारद्वाजोभारद्वा जाच्चासुरायणाच्चगौतमाच्च गौतमोभारद्वाजाद्भारद्वा-जोवलाकाकौशिकाद्वलाकाकौशिकः काषायणात्काषायणः सौकरायणात्सौकरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्ध-निः सायकायनात्सायकायनः कौशिकायनेऽ कौशिका-यनिर्घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पाराशर्या-यणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भार द्वाजाद्भारद्वाजोभारद्वाजाच्चासुरायणाच्च यास्काच्चासुरा-यणस्त्रैवणस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वा जाद्भारद्वाजोआत्रेयात् ॥ आत्रेयादात्रेयोमाण्टेर्माण्टिर्गौत-तमाद्गौतमोगौतमाद्गौतमोवात्स्याद्वात्स्यः शाण्डिल्याच्छा ण्डिल्यऽ कैशोर्यात्काप्यात्कैशोर्यऽकाप्यऽकुमारहारिता-त्कुमारहारितोगालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भी-कौण्डिन्यो वत्सनपातोबाभ्रवाद्वत्सनपाद्बाभ्रवऽ पथऽ सौभ-रात्पन्थाऽ सौभरो यास्यादाङ्गिरसादयास्यऽ आङ्गिरसऽ आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूप-स्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीचऽआथर्वणाद्दध्यङ्ङाथर्वणो दैवादथर्वादैवो मृत्योःप्राध्वंसनान्मृत्युःप्राध्वंसनः प्रध्वंठ

सनात्सनात्सनत्कुमारादीन्वा सनन्दनाः सनत्सुजातः सनातनः सनकः सनन्दनः सनत्कुमारः कपिलो आसुरिर्वोढुः पञ्चशिखश्च सप्तैते ब्रह्मणः पुत्राः । विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोऽसनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भुर्ब्रह्मणे नमः वंशोक्ता ऋषयस्तृप्यन्ताम् ॥ अथ वंशः समस्तादिदं वयं भारद्वाजीपुत्राद्भारद्वाजीपुत्रो वात्सीमाण्डवीपुत्राद्वात्सीमाण्डवीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो गार्गीपुत्राद्गार्गीपुत्रः पाराशरीकौण्डिनीपुत्रात् पाराशरीकौण्डिनीपुत्रो गार्गीपुत्राद्गार्गीपुत्रो वाडेयीपुत्राद्वाडेयीपुत्रो मौषिकीपुत्रान्मौषिकीपुत्रो हारिकर्णीपुत्राद्धारिकर्णीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पैङ्गीपुत्रात्पैङ्गीपुत्रः शौनकीपुत्राच्छौनकीपुत्रः ॥ काश्यपीबालाक्यामाठरीपुत्रात्काश्यपी बालाक्या माठरीपुत्रः कौत्सीपुत्रात्कौत्सीपुत्रो बौधीपुत्राद्बौधीपुत्रः शालंकायनीपुत्राच्छालङ्कायनीपुत्रो वार्षगणीपुत्राद्वार्षगणीपुत्रो गौतमीपुत्राद्गौतमीपुत्र आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो वात्सीपुत्राद्वात्सीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्र आर्तभागीपुत्रादार्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः साङ्कृतीपुत्रात्साङ्कृतीपुत्रः ॥ आलम्बीपुत्रादालम्बीपुत्र आलम्बायनीपुत्रादालम्बायनीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद्वैदभृतीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः साञ्जीवीपुत्रात्साञ्जीवीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः ॥ प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिर्याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वा-

वतो बाध्योगाज्जिह्वावान्बाध्योगोसिताद्वार्षगणादसितो-वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्य-पाच्छिल्पऽ कश्यपः कश्यपान्नैध्रुवेः कश्यपोनैध्रुविर्वाचोवा-गम्भिण्याऽ अम्भिण्यादित्यादादित्यानिमानिशुक्लानि य-जूᳬंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥ वंशोक्ता ऋषयस्तृप्यन्ताम् ॥ इमावेव गौतमभरद्वाजावयमेव गौत-मोयं भारद्वाजऽ इमावेवविश्वामित्रजमदग्नी अयमेवविश्वामि-त्रोयं जमदग्निरिमावेव वसिष्ठकश्यपा वयमेववसिष्ठोयं कश्य पोवागेवात्रिर्वाचाह्यन्नमद्यतेतिर्हवै नामैतद्यदात्रीरिति सर्व-स्यात्ताभवति सर्वमस्यान्नम्भवति यऽएवंवेद ॥ ब्राह्मणोक्ता ऋषयस्तृप्यंताम् ॥ ॐ तत्सवितुरिति चतुर्वारं गायत्रीं पठेत् ॥ इति प्रतिवंशवंशोक्तानामृषीणां तर्पणम् ॥ ततः सर्वे ॐ विरताः स्म इति सकृदुच्चर्ब्रूयुः ॥

अथाध्ययनक्रमः। तत्रतावच्चत्वारिंशदध्यायमंत्राः ॐ इषेत्वोर्जेत्वा-वायवस्थादेवोवः सविता प्रार्पयतुश्रेष्ठतमायकर्मणऽआ-प्यायध्वमघ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवाऽअयक्ष्मामाव स्तेनईशतमा घशᳬंसोध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्यज-मानस्य पशून्पाहि ॥ कृष्णोऽस्याखरेष्ठोऽग्नये त्वाजुष्ट-म्प्रोक्षामि ॥ वेदिरसि बर्हिषेत्वाजुष्टम्प्रोक्षामिबर्हिर-सिस्रुग्भ्यस्त्वाजुष्टम्प्रोक्षामि ॥ २ ॥ समिधाग्निन्दुवस्य-तघृतैर्बोधयतातिथिम् ॥ आस्मिन्हव्याजुहोतन ॥ एदमगन्मदेवयजनम्पृथिव्यायत्रदेवासोऽअजुषन्त विश्वेऽऋ-क्सामाभ्याᳬंसन्तरन्तोयजुर्भीरायस्पोषेण समिषामदेमऽ-इमाऽआपः शमुमे सन्तु देवीरोषधे त्रायस्व स्वधिते मैनᳬंहिᳬंसीः ॥ ४ ॥ अग्नेस्तनूरसि विष्णवे त्वा सोमस्य तनूरसि विष्णवे त्वातिथेरातिथ्यमसि विष्णवेत्वा श्येनाय-त्वासोमभृतेविष्णवेत्वाग्नयेत्वारायस्पोषदेविष्णवेत्वा ॥ ५ ॥

देवस्यत्वासवितुःप्रसवेऽश्विनोर्ब्बाहुभ्याम्पूष्णोहस्ताभ्याम्॥
आददेनार्यसिइदमहꣳरक्षसांग्रीवाअपिकृन्तामि॥यवोसियु-
वयास्मद्द्वेषोयुवयारातीः ॥ दिवेत्वान्तरिक्षायत्वापृथिव्यै-
त्वाशुन्धन्ताँल्लोकाःपितृषदनाःपितृषदनमसि ॥ ६ ॥
वाचस्पतयेपवस्ववृष्णोअꣳशुभ्याङ्गभस्तिपूतोदेवोदेवेभ्यः
पवस्वयेषाम्भागोऽसि ॥ ७ ॥ उपयामगृहीतोस्यादित्येभ्य-
स्त्वाविष्णउरुगायैषतेसोमस्तꣳरक्षस्वमात्वादभन् ॥ ८ ॥
देवसवितःप्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय ॥ दिव्योगन्धु-
र्वःकेतपूःकेतन्नःपुनातुवाचस्पतिर्वाजन्नःस्वदतु स्वाहा
॥ ९ ॥ अपोदेवीमधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः
॥ याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः
॥ १० ॥ युञ्जानःप्रथमम्मनस्तत्त्वायसवितधियः ।अग्ने-
र्ज्योतिर्निचाय्यपृथिव्याअध्याभरत् ॥ ११ ॥ दृशानोरुक्म-
उर्व्याव्यद्यौदुर्मर्षमायुःश्रियेरुचानः ॥ अग्निरमृतो अभ
वद्वयोभिर्यदेनंद्यौरजनयत्सुरेताः ॥ १२ ॥ मयि गृह्णाम्य
ग्रेअग्निꣳरायस्पोषाय सुप्रजास्त्वाय सुवीर्याय मामुदेवताः
सचन्ताम् ॥ १३ ॥ ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासिध्रुवंयोनि-
मासीदसाधुया॥उख्यस्यकेतुम्प्रथमञ्जुषाणाऽअश्विनाध्वर्यूसा-
दयतामिहत्वा ॥ १४ ॥ अग्नेजातान्प्रणुदानःसपत्नान् प्रत्य-
जातान्नुजातवेदः ॥ अधिनोब्रूहि सुमनाऽ अहेडँस्तवस्या-
मशर्मꣳस्त्रिवरूथउद्भौ ॥ १५ ॥ नमस्ते रुद्र मन्यवउतोत
इषवेनमः॥बाहुभ्यामुतते नमः ॥१६॥ अश्मन्नूर्जं पर्व-
तेशिश्रियाणामद्भ्यऽओषधीभ्यो वनस्पतिभ्योऽअधिसम्भृ-
तम्पयः ॥ तान्नइषमूर्जन्धत्त मरुतःसꣳरराणाः अश्मस्ते-
क्षुन्मयितऊर्ग्यन्द्विष्मस्तन्तेशुगृच्छतु ॥ १७ ॥ वाजश्चमेप्रस-
वश्चमेप्रयतिश्चमेप्रसितिश्चमेधीतिश्चमेक्रतुश्चमेस्वरश्चमेश्लोक-
श्चमे श्रावश्चमे श्रुतिश्चमे ज्योतिश्चमे स्वश्चमे यज्ञेनकल्प-

न्ताम् ॥ १८ ॥ स्वाद्वीन्त्वास्वादुनातीव्रान्तीव्रेणामृताममृतेन। मधुमतीमधुमतासृजामिसᳬंसोमेन सोमोस्यश्विभ्यांपच्यस्वसरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व॥ ॥ १९ ॥ क्षत्रस्ययोनिरसिक्षत्रस्यनाभिरसिमात्वाहिᳬंसीन्मामाहिᳬंसीः ॥ २० ॥ इमम्मेवरुणश्रुधीहवमद्याचमृडयत्वामवस्युराचके ॥ २१ ॥ तेजोऽसि शुक्रममृतमायुष्पाऽआयुर्मेपाहि ॥ देवस्यत्वासवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्यामाददे ॥ २२ ॥ हिरण्यगर्भःसमवर्त्ततागे्रभूतस्यजातःपतिरेकऽआसीत्॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवाय हविषा विधेम ॥ २३ ॥ अश्वस्तूपरोगोमृगस्तेप्राजापत्याः ॥ कृष्णग्रीवऽआग्नेयो रराटेपुरस्तात्सारस्वतीमेष्यधस्ताद्धन्वोराश्विनावधोरामौ बाह्वोः सौमापौष्णः श्यामोनाभ्याᳬंसौर्ययामौश्वेतश्चकृष्णश्च पार्श्वयोस्त्वाष्ट्रौलोमशसक्थौसक्थ्योर्वायव्यः श्वेतः पुच्छऽ इन्द्रायस्वपस्यायवेहद्वैष्णवोवामनः ॥ २४ ॥ शादन्दद्भिरवकान्दन्तमूलैर्मृदम्बर्स्वैस्तेगान् दᳬंष्ट्राभ्याᳬंसरस्वत्याऽ अग्रजिह्वञ्जिह्वायाऽ उत्सादमवक्रन्देनतालुवाजᳬंहनुभ्यामपऽआस्येन वृषणमाण्डाभ्यामादित्याँश्मश्रुभिः पन्थानम्भ्रूभ्यान्द्यावापृथिवीवर्तोभ्याँविद्युतङ्कनीनिकाभ्याᳬंशुक्लाय स्वाहा कृष्णायस्वाहा पार्याणि पक्ष्माण्यवार्याऽ इक्षवोऽ वार्याणि पक्ष्माणि पार्याऽ इक्षवः ॥ २५ ॥ अग्निश्च पृथिवीच सन्नतेतेमेसन्नमतामदो वायुश्चान्तरिक्षञ्चसन्नतेतेमेसन्नमतामदऽ आदित्यश्च द्यौश्च सन्नतेतेमेसन्नमतामदऽ आपश्च वरुणश्चसन्नते तेमेसन्नमतामदः ॥ सप्तसᳬंसदोऽ अष्टमीभूतसाधनी ॥ सकामाँ २ऽ अध्वनस्कुरुसञ्ज्ञानमस्तुमेऽमुना ॥ ॥ २६ ॥ समास्त्वाग्नऽऋतवोवर्धयन्तुसंवत्सराऽऋषयो-

यानिंसुत्या ॥ सन्दिुव्येनंदीदिहिरोच्नेनुविश्वाऽ आभां-
हिप्रदिशश्चतंस्रः ॥ २७ ॥ होतांयक्षत्समिधेन्द्रमिडस्प-
देनाभांपृथिव्याऽ अधि ॥ दिवोवर्ष्मन्त्समिध्यतुओ-
जिष्ठश्चर्षणीसहाम्वेत्वाज्यस्यहोतुर्यजं ॥ २८ ॥ समिद्धोऽ
अञ्जन्कृदरम्मतीनांघृतमंग्नेमधुंमत्पिन्वमानः ॥ वाजी वहं-
न्वाजिनंजातवेदोदेवानांवक्षिप्रियमासधस्थम् ॥ २९ ॥
देवंसवितः प्रसुंवयुज्ञम्प्रसुंवयुज्ञपतिंभगांय ॥ दिव्योगन्धुर्वः
केतुपूः केतंन्नः पुनातुवाचस्पतिर्वाजंन्नः स्वदतु ॥ ३० ॥
सुहस्रंशीर्षापुरुषः सहस्राक्षः सुहस्रंपात् ॥ सभूमिंठंस-
र्वतंस्पृत्वात्यतिष्ठद्दशांगुलम् ॥ ३१ ॥ तदेवाग्निस्तदांदि-
त्यस्तद्वायुस्तदुंचन्द्रमाः ॥ तदेवशुक्रन्तद्ब्रह्मताऽआपुः
सप्रजापतिः ॥ ३२ ॥ अस्याजरांसोदमामरित्राऽअर्चद्धूमा-
सोऽअग्नयं÷पावकाः ॥ श्वितीचयं÷श्वात्रासोभुरण्यवों-
वनुर्षदोंवायवोनसोमाः ॥ ३३ ॥ यज्जाग्रतोदूरमुदैति-
दैवुन्तदुंसुप्तस्यतथैवैतिं ॥ दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेक
न्तन्मेमनं÷शिवसंङ्कल्पमस्तु ॥ ३४ ॥ अपेतोयन्तु पणयो
सुम्नादेव पीयवं÷ ॥ अस्य लोकः सुतावतः ॥
द्युभिरहोंभिरक्तुभिर्व्यक्तंयमोदंदात्ववसानंमस्मै ॥ ३५ ॥
ऋचंवाचम्प्रपंद्ये मनोयजुःप्रपंद्येसामंप्राणम्प्रपंद्येचक्षुःश्रोत्र
म्प्रपंद्ये वागोज÷सुहौजोमायि प्राणापानौ ॥ ३६ ॥
देवस्यं त्वा सवितुः प्रसुवेऽश्विनोंर्बाहुभ्यांपूष्णोहस्तां-
भ्याम् ॥ आददेनारिंरसि ॥ ३७ ॥ देवस्यं त्वा सवितुः
प्रसुवेश्विनोंर्बाहुभ्यांपूष्णोहस्तांभ्याम् ॥ आददेदित्यैरा
स्नांसि ॥ ३८ ॥ स्वाहा प्राणेभ्यःसाधिंपतिकेभ्यः ॥
पृथिव्यैस्वाहाग्नयेस्वाहान्तरिंक्षायस्वाहा ॥ वायवेस्वाहा
दिवेस्वाहासूर्य्यायस्वाहा ॥ ३९ ॥ ईशावास्यमिदंसर्वं
यत्किञ्चजगंत्याञ्जगंत् ॥ तेनंत्यक्तेनभुञ्जीथामागृधः कस्य-

स्विद्धनम् ॥ ४० ॥ हिरण्मयेनपात्रेणसत्यस्यापिहितम्मु-
खम् ॥ योसावादित्येपुरुषः सोऽसावहम् ॥ ४१ ॥ ॐ ३
खम्ब्रह्म । अध्यायोक्ता ऋषयस्तृप्यन्ताम् ॥

अथ शतानि ॥ ॐइषेत्वोर्जेत्वा० ॥ १ ॥ परि-
तेधन्वनोहेतिरस्मान्वृणक्तुविश्वतः ॥ अथोयइऽषुधिस्तवा-
रेऽअस्मन्निधेहितम् । १६ । १२ ॥ २ ॥ अग्नेनयसुप-
थाराये ऽअस्मान्विश्वानि देववयुनानि विद्वान् ॥ युयो-
ध्यस्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउक्तिंविधेम । ५ । ३६
॥ ३ ॥ उपयामगृहीतोसिसुशर्मासिसुप्रतिष्ठानोबृहदु-
क्षायनमः ॥ विश्वेभ्यस्त्वादेवेभ्यऽ एषतेयोनिर्विश्वेभ्य-
स्त्वादेवेभ्यः । ८ । ८ ॥ ४ ॥ सोमस्यत्विषिरसितवेवमे-
त्विषिर्भूयात् । मृत्योःपाहिऽओजोसिसहोस्यमृतमासि ।
१० । ५ ॥ ५ ॥ परस्याऽअधि सँव्वतो वराँ २ ॥ ऽअभ्या-
तर ॥ यत्राहमस्मि ताँ २ ॥ ऽअव ॥ ११ । ७१ ॥ ६ ॥
अग्न्यावोऽअग्न्यामवत्वग्न्यान्यस्याऽउपावत॥ ताः सर्वाः
सँव्विदानाऽइदम्मेप्रावताव्वचः । १२ । ८८ ॥ ७ ॥ राज्ञ-
सिप्राचीदिग्विराडसिदक्षिणादिक्सम्राडसिप्रतीचीदिक्स्व
राडस्युदीचीदिगधिपत्न्यसिबृहतीदिक् । १४ ॥१३ ॥ ८ ॥
नमो हिरण्यबाहवे सेनान्ये दिशाञ्चपतये नमो नमो
वृक्षेभ्यो हरिकेशेभ्यः पशूनाम्पतये नमोनमः शष्पि-
ञ्जराय त्विषीमते पथीनाम्पतये नमो नमो हरिकेशायो-
पवीतिने पुष्टानाम्पतये नमोनमोबभ्लुशाय । १६ । १७ ॥
९ ॥ इन्द्रेमम्प्रतरान्नयसजातानामसद्वशी ॥ समेनँव्वर्चसा-
सृजदेवानाम्भागदाऽअसत् ॥ १७ ॥ ९१ ॥ १० ॥
इमौतेपक्षावजरौपतत्रिणौयाभ्याँ रक्षाँस्यपहँस्यग्ने ॥
ताभ्याम्पतेमसुकृतामुलोकँय्यत्रऽ ऋषयोजग्मुःप्रथमजाःपुरा-
णाः ॥ १८ ॥ ५२ ॥ ११ ॥ अन्नात्परिस्रुतोरसम्ब्रह्मणा० ॥

१९ ॥ ७५ ॥ १२ ॥ अश्विना तेजसा चक्षुः प्राणेन सरस्वती वीर्यम् ॥ वाचेन्द्रो बलेनेन्द्राय दधुरिन्द्रियम् । २८ । ८० ॥ १३ ॥ पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्राय स्वाहा नक्षत्रेभ्यः स्वाहौषधीभ्यः स्वाहा वनस्पतिभ्यः स्वाहा परिप्लवेभ्यः स्वाहा चराचरेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा । २२ । २९ ॥ १४ ॥ प्रजापतये च वायवे च गोमृगो वरुणायारण्यो मेषो यमाय कृष्णो मनुष्यराजाय मर्कटः । शार्दूलाय रोहिदृषभाय गवयी क्षिप्रश्येनाय वर्तिका नीलङ्गोः क्रिमिः समुद्राय शिशुमारो हिमवते हस्ती । २४ । ३० ॥ १५ ॥ ते ऽअस्य योषणे दिव्ये न योना ऽउषासा नक्ता ॥ इमं यज्ञमवतामध्वरन्नः । २७ । १७ ॥ १६ ॥ तनूनपात्पथ ऽऋतस्य यानान्मध्वा सम्ञ्जन्स्वदया सुजिह्व मन्मानि धीभिरुत यज्ञमृन्धन्देवत्रा च कृणुह्यध्वरन्नः ।२९। २६ ॥ १७ ॥ अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो ऽध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वँ विशे विशे ।३३ ।६ ॥ १८ ॥ अत्तुं नो ऽद्यात्तुमतिर्यज्ञं देवेषु मन्यताम् ॥ अग्निश्च हव्यवाहनो भवतन्दाशुषे मयः ॥ ॥ १९ ॥ यत्पश्चं ऽ आसीन्मखस्य तेन शिरो राध्यासं देवयजने पृथिव्याः ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ३७ ॥ ५ । २० ॥

अथ कण्डिकाः ॥ व्रतमुपैत्यथम् ॥ १ ॥ सवै कपालान्यवान्यतरऽ उपदधाति ॥ २ ॥ सवैस्रुचः सम्मार्ष्टि ॥ ३ ॥ हिङ्कृत्यान्वाह ॥ ४ ॥ सवै प्रवराया श्रावयति ॥ ५ ॥ ऋतवो हवै देवेषु यज्ञे भागमीषिरे ॥ ६ ॥ सवै पर्णशाखया वत्सानपाकरोति ॥ ७ ॥ मनवे ह वै प्रातः ॥ ८ ॥ सयत्राह ॥ ९ ॥ स सुयद्वा इतश्चेतश्च सम्भरन्ति ॥ १० ॥ उद्धृत्याहवनीयं सम्पूर्णाहुतिं जुहोति ॥ ११ ॥ सूर्योह

वाऽअग्निहोत्रम् ॥ १२ ॥ अथहुतेऽग्निहोत्रऽउपातिष्ठते ॥
॥ १३ ॥ प्रजापतिर्हवाऽइदमग्रऽएकऽएवास ॥ १४ ॥ पित्रा-
महाहाग्निषाहवैदेवाञ्सृजन्अन्नुतं ॥ १५ ॥ देवयजनञ्जोषयन्ते
॥ १६ ॥ दक्षिणेनाहवनीयंप्राचीनग्रीवंकृष्णाजिनेऽउपस्तृ-
णाति ॥ १७ ॥ सप्तपदान्यनुनिष्क्रामाति ॥ १८ ॥
शिरो वैयज्ञस्यातिथ्यंबाहूप्रायणीयोदयनीयौ ॥ १९ ॥
तद्वाऽएषपूर्वार्ध्योर्वर्षिष्ठस्थूणराजोभवति ॥ २० ॥ उदरमे-
वास्यसदं ॥ २१ ॥ अभिमादत्ते ॥ २२ ॥ तद्यत्रैतत्प्र-
वृत्तोहोताहोतृषदनऽ उपविशाति ॥ २३ ॥ प्रजापतिर्वैप्र-
जाः ससृजानोरिरिचानऽ इमामन्यत ॥ २४ ॥ प्राणोह-
वाऽअस्योपांशुः ॥ २५ ॥ चक्षुषीहवाऽअस्यशुक्रामन्थि-
नौ ॥ २६ ॥ भक्षयित्वासमुपहूताः स्मऽइत्युक्त्वोत्तिष्ठति ॥
॥ २७ ॥ मनोहवाऽअस्यसविता ॥ २८ ॥ आदित्येन
चरुणोदयनीयेन प्रचरति ॥ २९ ॥ प्रजापतिर्वाऽएषयद-
ंशुः ॥ ३० ॥ देवाश्च वाऽअसुराश्च ॥ ३१ ॥ अथस्रुव-
ञ्चाज्यविलापनीं चादाय ॥ ३२ ॥ अरण्योरग्नीसमारोह्य
॥ ३३ ॥ केशवस्य पुरुषस्य ॥ ३४ ॥ आग्नेयोष्टाक-
पालः पुरोडाशो भवति ॥ ३५ ॥ असद्वाऽइदमग्रऽआ-
सीत् ॥ ३६ ॥ प्रजापतिरग्निरूपाण्यभ्यधारयत् ॥ ३७ ॥
द्वितीयम् ॥ एतद्वै देवाऽ अब्रुवन् ॥ ३८ ॥ अथैनमतःखन
त्येव ॥ ३९ ॥ पर्णकषाय निष्पक्वाऽएताऽ आपो भवन्ति
॥ ४० ॥ भूयांसि हवींषि भवन्ति ॥ ४१ ॥ रुक्मु-
म्प्रतिमुञ्चविभर्त्ति ॥ ४२ ॥ वनीवाह्येताग्निंबिभ्रदित्याहुः
॥ ४३ ॥ गार्हपत्यं चेष्यन्पलाशशाखयाव्युदूहति ॥ ४४ ॥
अथातो नैर्ऋतीर्हरन्ति ॥ ४५ ॥ चितोगार्हपत्योभवाति ॥
॥ ४६ ॥ आत्मन्यग्निंगृह्णीतिचेष्यन् ॥ ४७ ॥ कूर्म्ममुपदधाति
॥ ४८ ॥ प्राणभृतउपदधाति ॥ ४९ ॥ द्वितीयांचिति-

मुपदधाति ॥ ५० ॥ तृतीयांचितिमुपदधाति ॥ ५१ ॥
चतुर्थींचितिमुपदधाति ॥ ५२ ॥ पंचमीं चितिमुपदधाति ॥
॥ ५३ ॥ नाकसदऽउपदधाति ॥ ५४ ॥ ऋतव्याऽउपद-
धाति ॥ ५५ ॥ अथातः शतरुद्रियञ्जुहोति ॥ ५६ ॥
उपवसथीयेहन्प्रातरुदितऽआदित्ये ॥ ५७ ॥ अथातोवैश्वा-
नरञ्जुहोति ॥ ५८ ॥ अथातोराष्ट्रभृतोजुहोति ॥ ५९ ॥
अथातःपयोव्रतताये ॥ ६० ॥ अग्निरेषपुरस्ताच्चीयते ॥
॥ ६१ ॥ प्रजापतिःस्वर्गंलोकमाजिगांसत ॥ ६२ ॥
प्राणोगायत्री ॥ ६३ ॥ प्रजापतिर्विस्रस्तम् ॥ ६४ ॥ तस्यवाऽ-
एतस्याग्नेः ॥६५॥ अथहैतेरुणे ॥ ६६ ॥ संवत्सरोवैयज्ञःप्रजा-
पतिः ॥ ६७ ॥ त्रिर्हवैपुरुषोजायते ॥ ६८ ॥ वागेववाऽएत-
स्याग्निहोत्रस्याग्निहोत्री ॥ ६९ ॥ उद्दालकोहारुणिः ॥ ७० ॥
उर्वशीहाप्सराः ॥ ७१ ॥ भृगुर्हवैवारुणिः ॥ ७२ ॥ पशुब-
न्धेन यजते ॥ ७३ ॥ तद्यथाह वै ॥ ७४ ॥ अयं वै यज्ञो योयं
पवते ॥७५ ॥ समुद्रंवाऽएते प्रचरन्ति ॥ ७६ ॥ यद्वालो
के ॥ ७७ ॥ दीर्घसत्रंहवाऽएतऽउपयन्ति ॥ ७८ ॥ तदाहु-
र्यद्वैषदीर्घसत्री॥ ७९ ॥ सोमो वै राजा यज्ञःप्रजापतिः॥८०॥
विश्वरूपवै त्वाष्ट्रमिन्द्रोहन् ॥ ८१ ॥ इन्द्रस्य वै सुत्र ॥
॥ ८२ ॥ एतस्माद्वै यज्ञात्पुरुषो जायते ॥ ८३ ॥ ब्रह्मौदनं
पचति ॥ ८४ ॥ प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत्॥८५॥
प्रजापतेरक्ष्यश्वयत् ॥ ८६ ॥ उत्तमंप्रजापतिरकामयत ॥८७॥
अथप्रातर्गौतमस्य॥ ८८॥ पुरुषोहनारायणोऽकामयत॥८९॥
ब्रह्म वैस्वयंभुतपोतप्यत ॥ ९० ॥ अथास्मैश्मशानंकुर्व-
न्तिद्यौःशान्तिः ॥ ९१ ॥ देवाहवैसत्रंनिषेदुः ॥ ९२ ॥
अथातोरौहिणञ्जुहोति ॥ ९३ ॥ सवैतृतीयेहन् ॥ ९४ ॥
द्वयाहप्राजापत्याः ॥ ९५ ॥ दृप्तबालार्किर्हानूचानोगार्ग्यऽ
आस ॥ ९६ ॥ जनकोहवैदेहः ॥ ९७ ॥ जनकंहवैदेहं-

ष्याज्ञवल्क्यो जगाम ॥ ९८ ॥ पूर्णमदः पूर्णमिदम् ॥ ९९ ॥ श्वेतकेतुर्हवाऽआरुणेयः ॥ १०० ॥ प्राश्नीपुत्रादासुरिवासिनः ॥ चतुर्दशकाण्डेष्वध्यायोक्ता ऋषयस्तृप्यन्ताम् ॥

अथ प्रपाठकाः । व्रतमुपैष्यन् ॥ १ ॥ चतुर्द्धा विहितोहवाऽअग्नेग्निरास ॥ २ ॥ तेवाऽआर्द्राःस्युः ॥ ३ ॥ स्रुस्तुचोत्तरमाघारमाघारयिष्यन् ॥ ४ ॥ यज्ञेनवैदेवाः ॥५॥ यज्ञेनवैदेवादिवमुपोदक्रामन् ॥६॥ सवैस्रुचौव्यूहाति॥७॥सयद्वाऽइतश्चेतश्चसम्भरति॥८ ॥ वरुणोहैनंराज्यकामआदधे॥ ॥ ९ ॥ यन्नवैप्रजापतिःप्रजाः ससृजे ॥ १० ॥ प्रजापतिर्हवाऽएतेनाग्रेयेनयज्ञेनेजे ॥ ११ ॥ महाहविषाह वैदेवावृत्रञ्जघ्नुः ॥ १२ ॥ देवयजनञ्जोषयन्ते ॥ ॥ १३ ॥ वाचँयच्छाति ॥ १४ ॥ नीडेकृष्णाजिनमास्तृणाति ॥ १५ ॥ तद्युएषपूर्वोह्योर्वर्षिष्ठस्थूणाराजोभवति ॥ १६ ॥ विजा मानोहैवास्याधिष्ण्याः ॥ ॥ १७ ॥ पाशे कृत्वा प्रतिमुञ्चति ॥ १८ ॥ सोत्पयजति ॥ १९ ॥ प्राणो ह वाऽअस्योपांशुः ॥ ॥ २० ॥ आत्मा ह वाऽअस्याग्रयणः ॥ २१ ॥ घ्नन्ति वाऽएतद्यज्ञम् ॥ २२ ॥ स वा ऽअवभृथमभ्यवैति ॥ ॥ २३ ॥ तद्यत्रैतद्द्वादशाहेनव्यूढच्छन्दसा यजते ॥ ॥ २४ ॥ देवाश्च वाऽअसुराश्च ॥ २५ ॥ बार्हस्पत्येन चरुणा प्रचरति ॥ २६ ॥ सवाऽअपः सम्भरति ॥ ॥ २७ ॥ मैत्रावरुण्यापयस्यया प्रचराति ॥ २८ ॥ असद्वाऽइदमग्रआसीत ॥ २९ ॥ प्राजापत्यंचरुंकाआलभते ॥ ३० ॥ प्रदीप्ताऽएतेग्नयोभवन्ति ॥ ३१ ॥ तस्याऽएतस्याऽआषाढांपूर्वाङ्करोति ॥ ३२ ॥ रुक्मंप्रतिमुञ्चबिभर्ति ॥ ३३ ॥ गार्हपत्यंचेष्युनपलाशशाखया व्युदूहाति ॥ ३४ ॥ अथदर्भस्तम्बमुपदधाति ॥ ३५ ॥

आत्मन्नग्निगृह्णीतेचेष्यन् ॥ ३६ ॥ कूर्ममुपदधाति ॥ ३७ ॥ प्राणभृतमुपदधाति ॥ ३८ ॥ अथाग्निश्वज्ज्योतिषमुपदधाति ॥ ३९ ॥ अथातोऽन्वावृतम् ॥ ४० ॥ गार्हपत्यमुपदधाति ॥ ४१ ॥ अथातःशतरुद्रियञ्जुहोति ॥ ४२ ॥ प्रत्येत्याग्निम्प्रहरिष्यन् ॥ ४३ ॥ अथैतान्यज्ञक्रतूञ्जुहोति ॥ ४४ ॥ अथप्रातःप्रातरनुवाकमुपाकरिष्यन् ॥ ॥ ४५ ॥ अग्निरेषपुरस्ताच्चीयते ॥ ४६ ॥ अथातश्चयनस्यैव ॥ ४७ ॥ सँवत्सरोवैप्रजापतिराग्निः ॥ ४८ ॥ नेव वाऽइदमग्रेसदासीन्नैवसदासीत् ॥ ४९ ॥ सँवत्सरोवैयज्ञः प्रजापतिः ॥ ५० ॥ अपिहवाऽएतर्हि ॥ ५१ ॥ प्रजापतिर्वै प्रजाः सृजमानोऽतप्यत ॥ ५२ ॥ अथातः स्वाध्यायप्रशꣳसा ॥ ५३ ॥ अयँवैयज्ञोयोयंपवते ॥ ५४ ॥ पुरुषꣳहनारायणंप्रजापतिरुवाच ॥ ५५ ॥ सोमोवैराजायज्ञःप्रजापतिः ॥ ५६ ॥ प्रजापतिर्यज्ञमसृजत ॥ ५७ ॥ ब्रह्मौदनंपचति ॥ ५८ ॥ नियुक्तेषुपशुषु ॥ ५९ ॥ प्रमुच्याश्वं दक्षिणेन वेदिम् ॥ ६० ॥ पुरुषो ह नारायणोऽकामयत ॥ ६१ ॥ देवा ह वै सत्रान्निषेदुः ॥ ६२ ॥ स यत्रैताꣳहोतान्वाह ॥ ६३ ॥ द्वयाह प्राजापत्याः ॥ ६४ ॥ दृप्तबालाकिर्हानूचानोगार्ग्यआस ॥ ६५ ॥ अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ ॥ ६६ ॥ जनकꣳहवैदेहँयाज्ञवल्क्यो जगाम ॥ ६७ ॥ भूमिरन्तरिक्षन्द्यौरिति ॥६८॥ प्राश्नीपुत्रादासुरी वासिनः ॥ ६९ ॥ इति चतुर्दशकांडे प्रपाठोक्ता ऋषयस्तृप्यन्ताम् ॥ इति प्रपाठकाः ॥

अथ शतस्थानानि ॥ व्रतमुपैष्यन् ॥ १ ॥ तद्यदेवंपिनष्टि ॥ २ ॥ अथाजालिताभ्यांपवित्राभ्याम् ॥ ॥ ३ ॥ बृहच्छौचायंविधोयोति ॥ ४ ॥ वसूनांꣳरात्रौ स्याम ॥ ५ ॥ अग्निर्वैदेवानामद्धातमाम् ॥ ६ ॥

तद्गुथायोनोरैतः सिञ्चेत् ॥ ७ ॥ तान्द्वैप्राश्नन्त्येव ॥ ८ ॥ अथवेदुपत्नीह्निसरठंसयाति ॥ ९ ॥ अयँव्वैयज्ञोयो-यंपुवते ॥ १० ॥ अथयदस्तसोति ॥ ११ ॥ रेवतीर-मध्यमिति ॥ १२ ॥ सवाऽ आग्नेयोष्टाकपालः पुरो-डाशोभवति ॥ १३ ॥ तद्येसोमेनेजानाः ॥ १४ ॥ अथोत्तरेण शालांपरिश्रयन्ति ॥ १५ ॥ अथोल्लि-खति ॥ १६ ॥ सायावभ्रुः पिङ्गाक्षीसासोमक्रयणी स्यात् ॥ १७ ॥ प्रथमन्तेदेवाः ॥ १८ ॥ इन्द्रघोषः प्रोक्षणीरध्वर्युरादत्ते ॥ १९ ॥ स्वाहाकद्रूरुवाच ॥ ॥ २० ॥ तद्वाऽएतदुच्छ्रितादेवाहवैयज्ञन्तन्वानाः ॥ ॥ २१ ॥ अथपार्श्वेनवासिनावाप्रयौति ॥ २२ ॥ सजुहोतिश्रृणोत्वग्निः समिधाहवंमऽइति ॥ २३ ॥ इयठंहवाऽउपांशुः ॥ २४ ॥ तस्यासावेवध्रुवऽ-आयुः ॥ २५ ॥ यत्रद्यावापृथिव्यठंशस्यते ॥ २६ ॥ सऽ आज्यस्योपस्तीर्याद्भिश्चरोरवद्यति ॥ २७ ॥ इन्द्रो हवैषोडशी ॥ २८ ॥ तासांद्वादशगर्भाः ॥ २९ ॥ द्वितीयातद्देहस्मपुराब्राजपेयेनयजते ॥ ३० ॥ अथ दिशोनुवीक्षमाणो जपति ॥ ३१ ॥ स वै दीक्षते ॥ ॥ ३२ ॥ अथैनमाभिषेकं कृष्णविषाणयानुविमृष्टे ॥ ३३ ॥ षडेवोत्तरेचरवः ॥ ३४ ॥ अथोऽआहुः प्रजापतिरेवविस्रस्तः ॥ ३५ ॥ अमावास्यायां दीक्षते ॥ ३६ ॥ अश्वस्य पदे जुहोति ॥ ३७ ॥ अथैनांधूपयति ॥ ३८ ॥ तमुपरिना-भिबिभर्ति ॥ ३९ ॥ अथोखान्निवपति ॥ ४० ॥ द्विती-याचतस्रः सीताधजुषाकृषति ॥ ४१ ॥ तंप्रत्यंचयन्तम् ॥ ४२ ॥ अपाङ्गभत्सीदेति ॥ ४३ ॥ तस्यमनोवैश्वकर्म-णामेति ॥ ४४ ॥ तद्वैषामध्यमास्वयामातृण्णा ॥ ४५ ॥ एकादशभिरस्तुवतेति ॥ ४६ ॥ तावाऽएकादशेष्टकाऽउप-

दधाति ॥ ४७ ॥ अथस्वयँतृणमुपदधाति ॥ ४८ ॥ अथो-त्तरार्द्धेन प्राक् ॥ ४९ ॥ सयः सवैश्वानरऽइमेसलोकाः ॥५०॥ ग्रास्तेऽअग्नेसूर्य्येरुचः ॥ ५१ ॥ नामकृत्वाथैनमुपातिष्ठते ॥५२॥ यावाऽइयंवेदिःसप्तविधस्य ॥ ५३ ॥ अयमेवाकाशोजूः ॥ ५४ ॥ सोयमात्मात्रेधाविहित एव ॥ ५५ ॥ अथवर्ठंशः ॥ ५६ ॥ अथयामेतामाहुतिंजुहोति ॥ ५७ ॥ अथयदनु-वाक्यामनूच्य ॥ ५८ ॥ ब्रह्मचार्य्यसीत्याह ॥ ५९ ॥ सय-त्पशुबन्धेनयजतेऽग्नीनेवैतत्पुनर्नवाकुरुते ॥ ६० ॥ दशेति-होवाच ॥ ६१ ॥ अथयत्रस्कन्नर्ठंस्यात् ॥ ६२ ॥ अथय-दिप्रप्लुतः ॥ ६३ ॥ सर्वऽआश्विनाभवन्ति ॥ ६४ ॥ प्र-जापतिर्यज्ञमसृजत ॥ ६५ ॥ किंवावपनंमहदिति ॥ ६६ ॥ अथयोस्यानिष्कःप्रतिमुक्तोभवति ॥ ६७ ॥ एतेनहेन्द्रोतो-देवापःशौनकः ॥ ६८ ॥ चतस्रःसीतायजुषाकृषति ॥ ६९ ॥ अथोत्तरतः सिकताऽउपकीर्णाभवन्ति ॥ ७० ॥ अथ रौ-हिणौ जुहोति ॥ ७१ ॥ तदेवाऽ अब्रुवंस्तावद्वाऽइदर्ठंसर्वं यदन्तम् ॥ ७२ ॥ तानि यदा गृह्णाति ॥ ७३ ॥ योग्नौ-तिष्ठन् ॥ ७४ ॥ कतम आत्मेति ॥ ७५ ॥ अथ हैनं म-नुष्या ऊचुः ॥ ७६ ॥ अथ यामिच्छेद्गर्भन्दधीतेति ॥७७॥ सप्तसहस्रषट्शतशेषं चतुर्विंर्ठंशतिः ॥ ७८ ॥ प्राश्नीपु-त्रादासुरीवासिनः ॥ ७९ ॥

इति चतुर्दशकाण्डे शतोक्ता ऋषयस्तृप्यन्ताम् ॥

अथ व्रतं विसृजते ॥ १ ॥ सयास्मिन्हर्तामँल्लोकमेति ॥ २ ॥ अथ निग्राभ्यो ग्रहान् विगृह्णते ॥ ३ ॥ अथ गृहपतिः सुब्रह्मण्यामाह्वयति ॥ ४ ॥ ता वाऽएताः ॥ ॥ ५ ॥ तानिदशभवन्ति ॥ ६ ॥ ताएताऽअङ्गुलयः ॥ ७ ॥ मध्यमेवतृतीयांचितिः ॥ ८ ॥ सहोवाच ॥ ९ ॥ अथवर्ठंशः ॥ १० ॥ तस्माउहैतदुवाच ॥ ११ ॥ सवाऽएषआत्मैवय-

त्सौत्रामणिः ॥ १२ ॥ मर्यादायाऽएवलोष्टमाहृत्य ॥ १३ ॥ प्राश्नीपुत्रादासुरीवासिनः ॥ १४ ॥ इति अन्त्यकाण्डिकोक्ता ऋषयस्तृप्यन्ताम् ॥

एवं व्रतंविसृजेत् ॥ १ ॥ परमांगतिङ्गच्छन्तीति ॥ २ ॥ तस्माद्धोतृचमसात् ॥ ३ ॥ तस्मिन्समुपहवमिष्ट्वासम्प्रिधोभ्या दधाति ॥ ४ ॥ द्वादशवान्त्रयोदशवादक्षिणाभवन्ति ॥ ५ ॥ यावानग्निर्यावत्यस्यमात्रातावद्भवति ॥ ६ ॥ तस्मात्समान-संबंधनाः ॥ ७ ॥ तस्मादिमेप्राणाऽउपरिष्टादसंछन्नाः ॥ ८ ॥ संवाढेनैवर्त्विजोलोकाऽइति ॥ ९ ॥ ब्रह्मणोब्रह्मस्वयंभु ब्रह्मणे नमः ॥ १० ॥ केशिनीरेवेमाआप्येतर्हिप्रजाजायंते ॥ ११ ॥ तस्मादिमावात्मानमभितोबाहू ॥ १२ ॥ तस्मा-दुहैतज्जीवाश्चपितरश्चनसंदृश्यन्ते ॥ १३॥ वाजसनेयेनयाज्ञ-वल्क्येनाख्यायन्ते ॥ १४ ॥ अन्त्यपंक्तिकोक्ताऋषयस्तृप्य-न्ताम् ॥ इत्यन्त्यपंक्तिका ॥ ॐ अग्निमीलेपुरोहितंयज्ञस्य देवमृत्विजम् ॥ होतारंरत्नधातमम् ॥ १ ॥ इषेत्त्वोर्ज्जेत्वा० ॥ २ ॥ अग्नऽआयाहिवीतयेगृणानोहव्यदातये ॥ निहोता सत्सिबर्हिषि ॥ ३ ॥ शन्नोदेवीरभिष्टय आपो भवन्तु पीतये।शंय्योरभि स्रवन्तु नः॥इत्यध्ययनम् ।ततः ॐ तदेतदृचाभ्युक्तं न मृषा श्रान्तं यदवांति देवाऽइतिनहैवैवंविदुषः किञ्चनमृषा श्रान्तं भवति तथोहास्यैतत्सर्वेदेवाऽअवन्ति ॥ ४ ॥ इति नमस्कुर्यात् ।

अथ ऋषिश्राद्धम् ॥ कृतप्राणायामो देशकालौ संकीर्त्य । ॐ उत्सर्गा-ङ्गभूतमृषिश्राद्धमहं करिष्ये । इति संकल्प्य ॐ इदं विष्णु० इति मंत्रेण दिग्बंधः। ऋषिश्राद्धस्योपहाराः शुचयो भवन्तु इत्युपहारप्रोक्षणम्। देशकालमात्रसंपदस्तु ॐ अरुंधतीसहितकश्यपादिऋषीणा-मिदमासनंयथायथाविभागंवः स्वाहा नमः॥अरुंधतीसहित-कश्यपादय ऋषयः यथादत्तगंधाद्यर्चनं यथायथाविभागं वः

स्वाहा नमः इति गंधादिदानम् ॥ ऋषिश्राद्धसांगतासिद्ध्यर्थं सप्तसंख्याकान् ब्राह्मणान् यथाकाले यथासम्पन्नान्नेन तर्पयिष्ये तेन अरुन्धतीसहिताःकश्यपादय ऋषयः प्रीयन्ताम् ॥ऋषिश्राद्धसांगतासिद्ध्यर्थं हिरण्यनिष्क्रयभूतां दक्षिणामाचार्याय तुभ्यम संप्रददे ॥ ततः आचार्यः । ॐ कोदादितिमंत्रं पठेत् । सयथा-ॐ कोऽदात्कस्माऽअदात्कामोऽदात्कामायादात् कामो दाताकामः प्रतिग्रहीता कामैतत्ते ॥ इति उपविष्टेषु ब्राह्मणेषु उदकादिदानम् ॥ तद्यथा ॥ ॐ शिवा आपः संतु ॥ सौमनस्यमस्तु । अक्षतं चारिष्टं चास्तु । अघोरा ऋषयः संतु । सन्त्विति प्रतिवचनम् । उत्सर्गकर्मणो न्यूनातिरिक्तदोषपरिहाराय भूयसीं दक्षिणां दद्यात् । तत उत्सर्गांगभूतमृषिश्राद्धं परिपूर्णमस्तु । अस्तु परिपूर्णमिति विप्रा वदेयुः । ततः ॐ सहनोऽस्तुसहनोऽवतुसहनऽइंद्रंवीर्यवदस्तुब्रह्मइन्द्रस्तद्वेदयेन यथा विद्विषामहे इति ॥ ॐ उभाकवीषु वा यो नोधर्मः परापततपरिसख्यस्यधर्मिणो विसख्यानिविसृजामहे ॥ इति च सर्वे जपेयुः विरताः स्मेति प्रब्रूयुः ॥ इत्यृषिश्राद्धम् ॥ अथ विसर्जनम् । ॐ उत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्रयंन्तुमरुतः सुदानवऽइंद्रप्राशूर्भवासचा ॥ स्वस्वप्रवरान्विसर्जयित्वाजलेप्रवाहयेत् । ॐ समुद्रङ्गच्छस्वाहान्तरिक्षङ्गच्छस्वाहा देवꣳसवितारङ्गच्छस्वाहा मित्रावरुणौगच्छस्वाहाहोरात्रेगच्छस्वाहा छंदाꣳसिगच्छस्वाहा द्यावापृथिवीगच्छस्वाहा यज्ञङ्गच्छस्वाहा सोमङ्गच्छस्वाहा दिव्यन्नभोगच्छस्वाहाग्निंवैश्वानरङ्गच्छस्वाहा मनोमेहार्दियच्छदिवंन्तेधूमो गच्छतु स्वर्ज्योतिः पृथिवीं भस्मना पृणस्वाहा ॥ ततो द्विराचमनं कुर्यात् ॥ ततो जलमादाय अनेनाध्यायोत्सर्गकर्माङ्गत्वेन कृतेन ऋषिपूजनतर्पणादिकर्मणा भगवान् परमेश्वरः प्रीयतां न मम ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति परमात्मने सन्तर्पयेत् । श्रावणीकर्म्मविधिः ।

**रक्षाबन्धनम्**—श्रावण्यां रक्षाबन्धनं पूर्णिमायां भद्रारहितायां कार्यम् ॥ तत्रादौ सर्षपाक्षतहेमसहितां विचित्रक्षौमवस्त्रैर्वा कार्पासतंतुभिर्ग्रथितां शुभां रक्षापोटलिकां शुद्धभाजने संस्थाप्य कुंकुमाक्षतैरभ्यर्च्य ब्राह्मणान्संपूज्य दक्षिणाभिः संतोष्य पूर्वमुखो ब्राह्मणद्वारा रक्षाबंधं कुर्यात् ॥ तत्र मंत्रः ॥ येन बद्धो बली राजा दानवेंद्रो महाबलः ॥ तेन त्वामभिबध्नामि रक्षे मा चल मा चल ॥ इति । अनेन विधिना यस्तु रक्षाबंधं समाचरेत् ॥ ससर्वदोषरहितः सुखी संवत्सरं भवेत् ॥इति रक्षाविधानम् ॥

अध्यायोपाकर्म, पारस्करगृह्यसूत्रे—अथातोऽध्यायोपाकर्मौषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्यां श्रावणस्य पञ्चम्यां हस्तेन वाज्यभागाविष्ट्वाज्याहुतीर्जुहोति । पृथिव्याऽअग्नयऽ इत्यृग्वेदेऽन्तरिक्षाय वायवऽइति यजुर्वेदे दिवे सूर्यायेति सामवेदे दिग्भ्यश्चन्द्रमसऽइत्यथर्ववेदे ब्रह्मणे छन्दोभ्यश्चेति सर्वत्र प्रजापतये देवेभ्यो ऋषिभ्यः श्रद्धायै मेधायै सदसस्पतयेऽनुमतयऽइति चैतदेव व्रतोदेशेन विसर्गेषु सदसस्पतिमित्यक्षतधानास्त्रिःसर्वेऽनुपठेयुर्हुत्वा हुत्वौदुम्बर्यस्तिस्रस्तिस्रः समिध ऽआदध्युरार्द्राः सपलाशा घृताक्ताः सावित्र्या ब्रह्मचारिणश्च पूर्वकल्पेन शन्नो भवत्वित्यक्षतधाना ऽअखादन्तःप्राश्नीयुर्दधिक्राव्णऽइति दधि भक्षेयुः स यावन्तं गणमिच्छेत्तावन्तस्तिलानाकर्षफलकेन जुहुयात्सावित्र्याशुक्रज्योतिरित्यनुवाकेन वा प्राशनान्ते प्रत्यङ्मुखेभ्य ऽउपविष्टेभ्य ॐकारमुक्त्वा त्रिश्च सावित्रीमध्यायादीन्प्रब्रूयादृषिमुखानि बह्वृचानां पर्वाणि छन्दोगानाᳬ सूक्ताभ्यार्थर्वणानाᳬ सर्वे जपन्ति सह नोऽस्तु नोवतु सह न ऽइदं वीर्यवदस्तु ब्रह्म ऽइन्द्रस्तद्वेद येन यथा न विद्विषामहऽइति त्रिरात्रं नाधीयीरँल्लोमनखानामनिकृन्तनमेके प्रागुत्सर्गात् ॥

**उपाकर्मपद्धतिः**—गुरुः हस्तौ पादौ प्रक्षाल्य **द्विराचम्या**—वसथ्याग्ने-र्लौकिकाग्नेर्वा पश्चाच्छिष्यैः सह प्राङ्मुख उपविश्य प्राणायामत्रयं कृत्वा देशकालौ सकीर्त्य **श्रीपरमेश्वरप्रीत्यर्थं अध्यायोपाकर्मणि पञ्चभूसंस्कार-पूर्वकमग्निसंस्थापनमहं करिष्ये** इति संकल्प्य पञ्चभूसंस्कारान्कुर्यात् । ते च **दर्भैः परिसमुह्य१गोमयोदकेनोपालिप्य२स्रुवेणोल्लिख्य३ अनामिकांगुष्ठाभ्यामुद्धृत्य४उदकेनाभ्युक्षेत ५** इति । तत्पुनःअग्निं प्रतिष्ठाप्य पात्रस्थापनादि कुर्यात्।तत्र पूर्वेण ब्रह्मणो गमनम्, अग्नेरुत्तरतःपात्रासादनम्, द्वे पवित्रे, ताम्रमयी आज्यस्थाली, पालाश्यःसमिधःप्राज्ञावाघारौ, समिद्धतमेऽग्नौ आज्य-भागौ, तिलहोमः, **ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात्** इति होममन्त्रः। पूर्णपात्रं, दक्षिणा । त्रिरात्रं, लोमनखाना-मनिकृन्तनम् ॥ ऋषिच्छन्दोदेवतास्मरणम्—**इषेत्वेत्यादिकस्य खम्ब्रह्मा-न्तस्य माध्यन्दिनीयस्य वाजसनेयकस्य यजुर्वेदाम्नायस्य विवस्वानृषिः वायुर्देवता गायत्र्यादीनि सर्वाणि छन्दांसि अध्यायोपाकर्मणि विनियोगः-देवताभिध्यानम्**-तत्र—**प्रजाप-तिम्, इन्द्रम्, अग्निम्, सोमम्, पृथिवीम्, अग्निम्, ब्रह्माणम्, छन्दा-ꣳसि अन्तरिक्षम्, वायुम्, ब्रह्माणम्, छन्दाꣳसि, दिवम्, सूर्य्यम्, ब्रह्माणम् छन्दाꣳसि, दिशः, चन्द्रमसम्, ब्रह्माणम्, छन्दा-ꣳसि, प्रजापतिम्, देवान्, ऋषीन्, श्रद्धाम्, मेधाम्, सद-सस्पतिम्, अनुमतिम्, एताः** प्रधानदेवता आज्येन । **सदसस्प-तिम्** धानाभिः, **सवितारं** तिलैः, **अग्निं स्विष्टकृतं** धानाशेषेण, **अग्निम् । वायुम् । सूर्य्यम् । अग्नीवरुणौ । अग्नीवरुणौ । अग्निम् । वरुणम् । सवितारम् । विष्णुम् । विश्वान्देवान् । मरुतः । स्वर्क्कान् । वरुणम् । प्रजापतिम् ।** एता अङ्गप्रधानार्था देवता अस्मिन्कर्मण्यहं यक्ष्ये । ब्रह्मवरणम् । दक्षिणतो ब्रह्मासनमास्तीर्य अमुक-शर्मन् अस्मिन्कर्मणि त्वं 'ब्रह्मा' भव इति यजमानवचनम् । भवामीति प्रति-वचनम् । ब्रह्मा तूष्णीं आसनावलोकनं आसनात्तृणनिरसनञ्च कृत्वा उपविशेत् । अग्नेरुत्तरतः प्रणीतार्थमासनद्वयं निधाय । प्रणीताचमसं वामहस्ते कृत्वा आत्मा-

१ " प्रणीतापात्रामिति पाठान्तरम् ।"

भिमुखं जलेनापूर्य प्रथमासने निधाय चमसदण्डमालभ्य ब्रह्माणमवलोक्य तेन संकेतादिनाऽनुज्ञातः प्रणीतोत्तरासने निदध्यात् । तत उदगग्रैः प्रागग्रैः कुशैरग्निं परिस्तीर्य । अर्थवदासाद्य । अग्नेरुत्तरतः प्राक्संस्थमुदक्संस्थं वा पात्रासादनम् । पवित्रच्छेदनार्थं दर्भास्त्रयः । पवित्रे द्वे । प्रोक्षणीपात्रम् । आज्यस्थाली । सम्मार्जनकुशास्त्रिप्रभृतयः । उपयमनकुशाः सप्तप्रभृतयः । समिधस्त्रिप्रभृतयः । स्रुवः । आज्यम् । धानाः । पूर्णपात्रं च ॥

**अथोपकल्पनीयानि**—प्रतिशिष्यं नव नव समिध आर्द्राः सपत्रा औदुम्बरस्य । दधि भक्षणार्थम् । लौकिका धाना बाहुमात्रमौदुम्बरकाष्ठं तिलस्थापनस्थाने सर्पफणाकारमाकर्षफलकम् । तिलाश्चेति । पवित्रकरणम् । द्वयोरुपरि त्रीणि निधाय द्विमूलेन द्वौ कुशौ प्रदक्षिणीकृत्य सर्वान्युगपद्धृत्वाऽनामिकाङ्गुष्ठाभ्यां छित्त्वा तानुत्तरतः प्रक्षिपेत् । प्रोक्षणीपात्रं प्रणीतोत्तरतो निधाय । प्रोक्षणीपात्रे पात्रान्तरेण प्रणीताद्भिस्तासां प्रोक्षणम् । सपवित्रहस्तेनोत्तानेन पात्रप्रोक्षणम् । आज्यस्थाल्याः प्रोक्षणम् । संमार्गकुशानां प्रोक्षणम् । उपयमनकुशानां प्रोक्षणम् । समिधां प्रोक्षणम् । स्रुवस्य प्रोक्षणम् । आज्यस्य प्रोक्षणम् । धानानां प्रोक्षणम् । पूर्णपात्रस्य प्रोक्षणम् । प्रणीताग्न्योर्मध्ये सञ्चरे प्रोक्षणीं निधाय । कुशोपग्रहेण आज्यस्थाल्यामाज्यनिर्वापः । आज्याधिश्रयणम् । ततो ज्वलदुल्मुकेन पर्यग्निकरणम् । इतरथावृत्तिः । अर्धश्रिते स्रुवं प्रतप्य । संमार्गकुशैः संमृज्य । अग्रैर्मूलादारभ्याग्रपर्यन्तं मूलैरग्रादारभ्य मूलपर्यन्तं प्रणीतोदकेनाभ्युक्ष्य । पुनः प्रतप्य । दक्षिणतो निदध्यात् । आज्यमुद्वास्य । उत्तरतो निधाय । ततोऽग्नेः पश्चिमतो निदध्यात् । पवित्राभ्यामाज्यमुत्पूय । प्रोक्षणीश्च पूर्ववदुत्पूय । आज्यमवेक्ष्य । अपद्रव्यनिरसनम् । उपयमनकुशानादाय । तिष्ठन् समिधोऽभ्याधाय । प्रोक्षण्युदकशेषेण सपवित्रेण हस्तेनेशानमारभ्येशानपर्यन्तं प्रदक्षिणमग्निं पर्युक्ष्य । इतरथावृत्तिः । पवित्रयोः प्रणीतासु निधानम् । सोपग्रहं सव्यहस्तमुत्तानं हृदि निधाय दक्षिणजानुनिपातः ब्रह्मणोऽन्वारम्भः । दक्षिणहस्तेन स्रुवेण होमः । मनसा—**ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम** ॥ ( त्यागान्ते द्रव्यप्रक्षेपः । प्रोक्षणीपात्रे संस्रवधारणम् । ) **ॐ इन्द्राय स्वाहा । इदमिन्द्राय न मम ॥ ॐ अग्नये स्वाहा इदमग्नये न**

मम ॥ ॐ सोमाय स्वाहा इदं सोमाय न मम॥ सप्तविंशत्याहुतयः-ॐ पृथिव्यै स्वाहा इदं पृथिव्यै न मम। ॐ अग्नये स्वाहा इदमग्नये न मम। ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे न मम।ॐ छन्दोभ्यः स्वाहा इदं छन्दोभ्यो न मम॥यजुर्वेदे-ॐ अन्तरिक्षाय स्वाहा इदमन्तरिक्षाय न मम। ॐ वायवे स्वाहा इदं वायवे न मम। ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे न मम। ॐ छन्दोभ्यः स्वाहा इदं छन्दोभ्यो न मम॥ सामवेदे-ॐ दिवे स्वाहा इदं दिवे न मम। ॐ सूर्याय स्वाहा इदं सूर्याय न मम। ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे न मम। ॐ छन्दोभ्यः स्वाहा इदं छन्दोभ्यो न मम ॥ अथर्वणवेदे-ॐ दिग्भ्यः स्वाहा इदं दिग्भ्यो न मम। ॐ चन्द्रमसे स्वाहा इदं चन्द्रमसे न मम। ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे न मम। ॐ छन्दोभ्यः स्वाहा इदं छन्दोभ्यो न मम। ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम।ॐ देवेभ्यः स्वाहा इदं देवेभ्यो न मम। ॐ ऋषिभ्यः स्वाहा इदमृषिभ्यो न मम। ॐ श्रद्धायै स्वाहा इदं श्रद्धायै न मम। ॐ मेधायै स्वाहा इदं मेधायै न मम। ॐ सदस्पतये स्वाहा इदं सदसस्पतये न मम। ॐ अनुमतये स्वाहा इदमनुमतये न मम। ॐ सदसुस्प्पतिमद्भुतम्प्प्रियमिन्द्रस्यु काम्म्यम्। सनिम्मेधामयासिषु७ स्वाहा। ३२। १३॥ इदं सदसस्पतये न मम। इमं मन्त्रं गुरुणा पठ्यमानं शिष्या अपि सहानुपठेयुः। तत उदुम्बरसमित्त्रितयमभिघार्य हस्ते गृहीत्वा उत्थाय प्राङ्मुखास्तिष्ठन्तः। ॐ तत्त्सवितुर्वरेण्यु०। ३०।२॥ स्वाहा इदमग्नये न मम इत्युच्चार्य एकां समिधमादध्युः। एवं मंत्रेण द्वितीयां तथा तृतीयाम्। ततः सर्वे उपविशेयुः। आचार्यः पुनः स्रुवेण धाना अवदाय ॥ द्वितीयां धानाहुतिं पूर्ववत्-ॐ तत्त्सवितु०। ३०। २॥ स्वाहा इदमग्नये न मम॥ ततस्तिस्रोऽपराः समिधो घृतेनाभ्यज्य। उत्थाय प्राङ्मुखास्तिष्ठन्तः-ॐ तत्त्सवितु०। ३०।४२॥ स्वाहा इदमग्नये न

मम ॥ (इत्युच्चार्य एकां समिधमादध्युः । ) पुनः ॐ तत्सवितु० ३०।२॥ स्वाहा इदमग्नये न मम । एवं द्वितीया । पुनः ॐ तत्सवितु० । ३० । २ ॥ स्वाहा इदमग्नये न मम ॥ एवं तृतीयां हुत्वाऽऽचार्यो धानाहुतिं जुहुयात् । ॐ सदसस्पति० । ३२ । १३ ॥ स्वाहा इदं सदसस्पतये न मम ॥ मन्त्रानुपठनम्( शिष्याणामपि—समित्त्रयं पूर्ववज्जुहुयात् )—ॐ तत्सवितु० । ३० । २ ॥ स्वाहा इदमग्नये न मम । एवं द्वितीयां तथा तृतीयाम् । ब्रह्मचारी तु । शिष्योऽहरहरग्निकार्यक्रमेण समिदाधानं कुर्यात् न सावित्र्या । अन्यत्सर्वं समानम् ॥ धानाभक्षणम्– ( ततो या उपकल्पिता धानास्तिस्रस्तिस्रो गृहीत्वा )– ॐ शन्नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः । जम्भयन्तोऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्नमीवाः । । ९ । १६ ॥ इति मन्त्रेण दन्तैरखादन्तः प्राश्नीयुः ॥ ततो द्विराचमनम् ॥ दधिभक्षणम्—ॐ दधिक्राव्णोऽअकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्रणऽआयूꣳषि तारिषत् । ३ । ३२ ॥ इति मन्त्रेण दधि भक्षेयुः । द्विराचमनम् ॥ ( तत आचार्यो यावन्तं शिष्यगणं आत्मन इच्छेत्तावतस्तिलान् गणयित्वा आकर्षफलकेनावदाय )–ॐ शुक्रज्योतिश्च । चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च शुक्रश्चऽऋतपाश्चात्यꣳहाः । १७ । ८० ॥ इत्याद्यनुवाकेन सावित्र्या वा जुहुयात् । ॐ तत्सवितु० । ३० । २ ॥ स्वाहा इदं सवित्रे न मम ॥ ( ततो धानाभ्यः स्विष्टकृत् )—ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम ॥ 'भूराद्या नवाहुतयः'–( आज्येन जुहुयात् । सर्वत्र त्यागान्ते द्रव्यप्रक्षेपः ।) 'तद्यथा'–१ ॐ भूः स्वाहा इदमग्नये न मम ॥ २ ॐ भुवः स्वाहा इदं वायवे न मम ॥ ३ ॐ स्वः स्वाहा इदं सूर्याय न मम ॥ ४ ॐ त्वन्नो ऽअग्ने वरुणस्य विद्वान् देवस्य हेडोऽअवयासिसीष्ठाः । यजिष्ठो वह्नि-

